# श्री भूपेन्द्रसूरिजैनसाहित्यसमिति तरफसे प्रकाशित ग्रन्थ

१ सूक्तमुक्तावली संस्कृतपद्यमयी
२ जिनेन्द्रगुणमंजरी
३ श्री भूपेन्द्रसूरि जयन्ती
४ भगवत्समस्तवनमाला
५ सिन्दूरप्रकर सान्वय हिन्दी अर्थ सह
६ शांतसुधारसभावना हिन्दी भावार्थ सह
७ पद्यान्तस्तवक संस्कृतव्याख्यायुक्त

उक्त पुस्तकें भेट तथा पोस्ट खर्च के भेजने पर निम्न पते से मिलेगी।

श्री भूपेन्द्रसूरिजैनसाहित्यसमिति
मु॰ आहोर (मारवाड़)
(वाया एरनपुरा रोड)

# दो शब्द

प्रिय पाठकगण ! स्वर्गीय पू० पा० साहित्यविशारद विद्याभूषण आचार्यदेव श्रीमद्विजयभूपेन्द्रसूरीश्वरजी महाराज सा० विरचित टीकायुक्त दृष्टान्तशतक ७ वें पुष्प तरीके प्रकाशित हो रहा है। आपके रचित ग्रंथ प्रकाशनार्थ आहोर ( मारवाड़ ) में सं. १९९५ चैत्र वदि २ को वर्तमानाचार्य पू० पा० व्या० वा० आचार्यदेव श्रीमद्विजययतीन्द्रसूरीश्वरजी महाराज आदि मुनि-मंडलने एकत्रित हो 'श्रीभूपेन्द्रसूरिजैनसाहित्यसमिति' नामक संस्था कायम की, इस संस्थाद्वारा प्रकाशित होनेवाले ग्रंथों के सशोधन तथा प्रकाशनकार्य संपादन करने के लिये पू० पा० उपाध्यायजी श्रीमान् गुलाबविजयजी, मुनिराज तपस्वी हर्षविजयजी, मुनिराज श्रीहंसविजयजी, और मुनि श्रीकल्याणविजयजी इन चार मुनिवरों की नियति की गई। समिति के कायम होजानेपर समितिने सद्‌गत पू० पा० आचार्यश्री के रचित-ग्रंथ संशोधन तथा प्रकाशन का कार्य प्रारम्भ करदिया है। अतः शनैः २ पाठकवर्ग के हाथों में आपश्रीके द्वारा रचित ग्रंथ क्रमशः प्रकाशित होकर पहुँचते रहेंगें और पाठकवर्ग भी त्रुटियों को सुधारकर सद्‌गत आचार्यदेव तथा समिति के मुनिवरों का परिश्रम अपनाकर सफल करेंगें।

निवेदिका—**श्रीभूपेन्द्रसूरिजैनसाहित्यसंचालकसमिति**

मु० पो० आहोर ( मारवाड )

श्रीभूपेन्द्रसूरि–जैनसाहित्य–पुष्पाङ्कः ७

साहित्यविशारद–विद्याभूषण–श्रीमद्विजयभूपेन्द्रसूरीश्वर–विरचितं संस्कृतव्याख्यायुतम्

# दृष्टान्तशतकम् ।

तत्रादौ ग्रंथकर्तृमंगलाचरणं–शार्दूलविक्रीडित–छन्दसि—

नत्वा श्रीऋषभं सदा वृषधरं सौख्याकरं सुन्दरं, देवेन्द्रादिनुतं मुनीन्द्रमहितं पौरस्त्यतीर्थंकरम् ।
श्रोतॄणां प्रतिबोधकं सुखकरं दृष्टान्तकानामहं, कुर्वे काव्यशतं निजापरनृणां व्याख्यानसङ्केतवे ।१।

अर्थः—मंगलं प्रारिप्सितकामो ग्रन्थकर्ता पूर्वं श्रीतीर्थङ्करनमस्कारात्मकं मङ्गलं करोति नत्वेत्यादिना सदा निरन्तरं वृषो धर्मस्तस्य धारकं, सुखराशिं, सुन्दरं मनोहरं रूपवन्तं, देवेन्द्रादयो यं नमस्कुर्वन्ति, तं पुण्डरीकादिभिर्मुनिभिरर्चितमीदृशं प्रथमं तीर्थङ्करं श्रीऋषभदेवं भगवन्तं नमस्कृत्य श्रोतॄणां भव्यप्राणिनां, प्रतिबोधकं ज्ञानदं, सुखकरं, कल्याणकरं, एवमात्मने परजनेभ्यश्च, व्याख्यानसौकर्याय दृष्टान्तानां शतकाव्यात्मकानामर्थात् दृष्टान्तशतकनाम्नो ग्रन्थस्य रचनामारचयामि करोमीतिभावः ॥ १ ॥

व्याख्याकर्तुर्मङ्गलाचरणम्—वसन्ततिलका-वृत्ते—

श्रीवर्द्धमानभगवन्तमिनं सबोधं, राजेन्द्रसूरिसुगुरुञ्च गुरोर्गुणाढ्यम्।
दृष्टान्तकाव्यशतकोपरि संस्कृतेऽहं, व्याख्यां करोमि भविनामुपदेशदातुम् ॥ १ ॥

अत्र मंगलेच्छुको व्याख्याकर्त्ता समस्तदोषनिर्मुक्तं रागद्वेषौ जयतीति जिनं जिनेश्वरं श्रियाः ज्ञानादिलक्ष्म्या युतं एतादृशं श्रीवर्द्धमानं-महावीरस्वामिनं पुनस्तथैव गुरोर्गुणैर्युक्तं सूरेः षट्त्रिंशद्गुणैः सहितं स्वकीयं श्रीविजयराजेन्द्रसूरिं गुरुवरभगवन्तम् नमस्कृत्य भव्यप्राणिनामुपदेशार्थमहं विजययतीन्द्रसूरिर्दृष्टान्तशतकाव्यस्य भाषानुसारेण सरलसंस्कृते व्याख्यां करोमि इत्याभीतिभावः।

अथाऽनित्यपञ्चेन्द्रियविषयसुखोपरि मधुबिन्दोः १—दृष्टान्तः—

तत्र तावत् संसारसुखस्य मधुबिन्दूपमां दृष्ट्वा मधुबिन्दुदृष्टान्तमवतारयति, शार्दूलविक्रीडित—छन्दसि यथा—

कश्चित्काननकुञ्जरस्य भयतो नष्टः कुबेराख्य-शाखासु भ्रमणं चकार फणिनं कूपे स्वधो दृष्टवान्।
वृक्षो धारणकम्पितोऽथ मधुनो बिन्दून्निपीतो लेढि स, लुब्धश्चाऽमरबाधितोऽपि न ययौ संसारसक्तो यथा ॥२॥

कश्चिन्नरो वने गच्छन् कश्चिद्धस्तिनं दृष्टवान् तद्भयेन च पलायितः। यदा नागस्तस्य समीपमागतस्तदा स पुरुषः कुबेराख्य इति कुबेरस्य-धनदावासाऽऽलय कुबेराख्यः, अर्थात् न्यग्रोधनिकट-कूपे लम्बमानां वटवृक्षजटां जग्राह। एतावता भयेन व्याकुलः सन् कूपे लम्बमानां वटशाखां गृहीत्वा मध्य एव लम्बमानः स्थितः। तदनन्तरं स पुरुषोऽधो विलोकते तर्हि तस्मिन् कूपमध्ये

बृहत्कायांश्चतुरोऽजगरभुजंगानद्राक्षीत् । यदा चोपरि वीक्षते, तर्हि यां जटां स्वयमवलम्ब्य स्थितोऽस्ति तामेव जटामेकः कृष्णोन्दुरोऽपरश्च शुक्लोन्दुरुरित्थं द्वौ मूषकौ कृन्ततः । एतदवसरे गजेनागत्य वटवृक्षो विधूनितः । भूयो भूयोऽतिकम्पनेन तत्स्थात्क्षौद्रपटलान्मधुमक्षिका उड्डीय २ तं पुरुषं ददंशुः । क्षौद्रपटलश्चापि विशीर्णं, तस्मात् स्थित्वा २ मधुनो बिन्दवः पुरुषस्य भालमभिपेतुः । ततो मन्दं मन्दं प्रवहन्तस्ते बिन्दवस्तस्याधरं पस्पृशुस्तान् स जिह्वया लेढि तदा तन्माधुर्यमुपलेभे । पश्चात्सोऽसकृत् च्योतत्सु मधुबिन्दुषु प्रसक्तः पुरुषो विमानमधिरुह्य गच्छता केनाऽपि विद्याधरदेवेनाऽऽकारितः । भोः पुरुष ! त्वमिमं विमानमधितिष्ठ, व्रज चास्माभिः साकम्, अहन्त्वां व्यसनादस्मान्मोचयिष्यामि । इत्थं पौनःपुन्येनोक्तोऽपि यथा स पुरुषो मधुबिन्दुरसलुब्धो देवेन सह नो जगाम । तथैवायं सांसारिकजीवोऽपि संसारमध्ये मधुबिन्दुसदृशेषु विषयभोगेषु क्षणभंगुरेषु रतो देवविमानप्राप्तितुल्यं सद्धर्मं तीर्थंकरादिनोक्तं नाङ्गीकरोति । अत्रैवमुपनयमवतारयति—अस्मिन् संसारे चतुरशीतिलक्षयोनिरूपाऽटवी, तत्राऽनादिकालतो मिथ्यात्विनः प्राणिनो भृशं भ्रमन्ति, उक्ताटव्यां जरामरणमेव कूपो विज्ञेयः, तस्मिन् पृथक् पृथगष्टप्रकृतिस्वरूपाण्यष्टकर्माण्येव जलम्, पुनस्तत्र नरकतिर्यग्गतिरूपाजगरावतिदुःखप्रदौ चतुष्कषायरूपाश्चत्वारो बृहत्काया विषधराः, शुक्लकृष्णपक्षरूपौ मूषकौ मृत्युमतंगजकंपितस्यायुर्वटस्य जीवनजटां कृन्ततः, पुनर्वियोग–रोग–शोक–भोग–संयोगादय एव मधुमक्षिकादंशनानि सन्ति । तत एवं स्थितौ सद्गुरुरूपेण विद्याधरदेवेन धर्मविमानं संस्थाप्याकारिता अपि मधुबिन्दूपमेषु पंचेन्द्रियविषयभोगेष्वासक्ता मिथ्यादृष्टयस्तं सुगुरुमनादृत्योक्तविशेषणविशिष्टभवकान्तारमटन्तीति सम्बन्धो विज्ञेयो धीधनैः सज्जनैः ॥ २ ॥

यदुक्तं जम्बूस्वामिना स्वभार्यां प्रति दोहा—

जम्बूस्वामी पूछथे, म करो हठ मुझ नार । नर लुब्धो मधुबिन्दुए, तिम न रहुं संसार ॥ १ ॥
मधुबिन्दु संसार सुख, जाणी छाडुं आज । साधुपणुं ज विमान सम, लीजे अविचल राज ॥ २ ॥

अथाऽनेकान्तवाद्येकान्तवादिनोः २–कथानकम्—

तथैकान्तवादिनो पञ्चदर्शनिकानां पञ्चान्धैर्गजदर्शकैर्गमोदाहरणेन तन्मिथ्यात्वं प्रदर्शयति—

पंचान्धा गजदर्शनार्थमगमन् कर्णाधिशुण्डाङ्घ्रिज–पुच्छान् वीक्ष्य गजो यदन्ययमिति क्रुद्धो मया कीदृशः ।
शूर्पस्तम्भकदल्यथालकुटवच्चक्रुर्विवादं जडा–स्तद्वत्सर्वमतानुगा मदयुताः सर्वाङ्गवादी जिनः ॥ २ ॥

कस्मिंश्चिदधिष्ठाने पंचान्धाः पुरुषा आसन्, ते करिणं विलोकितुं तत्समीपे ययुः । तत्रैकेनान्धेन गजः श्रोत्रदेशे हस्तेन परामृष्टोऽपरेणांघ्रिषु, तृतीयेन शुण्डादण्डोपरि, चतुर्थेनाऽग्रदन्तयोः, पञ्चमेन लाङ्गूलप्रदेशे, एवं पाणिपरामर्शानन्तरं समुपेत्य मिथो गजस्वरूपं वर्णितुं प्रारेभिरे । अथ तेषां मध्ये यो हि करेण गजकर्णमस्पृशत् सोऽवदत्–शूर्पनिभो मातङ्गः, यः करिचरणमस्प्राक्षीत् सोऽवदद्–द्विरदस्तु देवालयस्तम्भसदृशः, यस्य पाणी शुण्डादण्डोपरि स ऊचे–गजस्तु कदलीस्तम्भोपमः, यस्य हस्तौ करिदन्तौ स जगाद–कुञ्जरो मुसलसदृशः, लाङ्गूलस्पर्शकस्तु पंचमोऽजल्पीत्–नागस्तु वेणुरिव लक्ष्यते । एवं मिथो विवदमानास्ते मूढा अन्योन्यं जगदुः यत्त्वं मृषावादी, अहन्तु तथ्यमेव वच्मीति । तथैवाऽत्राऽन्येऽपि धर्माचार्याः कुमतिप्रमथिता अर्हत्मापरीक्षा जिनधर्मविमुखा अतोऽन्यगतं प्रलपन्तः पंचान्धसदृशाः कथनीयाः । तस्मात्सर्वाङ्गवादिनमनेकान्तपक्षिस्तत्सर्वज्ञमतमेव प्रधानत्वेन वरीवर्ति ॥ २ ॥ तदुक्तं—

दोहा–षट् मत है संसारमें, पंच ते अंध समान । इक इक वस्तूने ग्रहे, जिनमत सर्व प्रधान ॥ १ ॥
काल सहावो नियई, पुव्वकयं पुरिसकारयं चेव । समवाए सम्मत्तं, एगंतं होइ मिच्छत्तं ॥ २ ॥

अथाऽऽहारानुकूलनीहारो भवति तदुपरि दीपकस्य ३–दृष्टान्तः—

संपृष्टा विभुनैकदा निकटगाः कृष्णं कथं कज्जलं ?, नो वर्त्यादिषु कालिमा किल ततः प्राहैकधीमान्नृपम् ।
ध्वान्तं भक्षति दीपकस्तु नृपते ! तेनैव कृष्णाञ्जन–माहारो भुवि यादृशो भवति वा नीहारकस्तादृशः॥ ४ ॥

एकस्मिन्नहनि केनचिद् भूपालेन स्वपरिषदि निषण्णाः सभ्याः पृष्टाः । यत्प्रज्वलिते प्रदीपार्चिषि कालिमा कस्माद् दरीदृश्यते ? यतो हि दीपे कार्पासवर्तिका तु धवला तत्र कार्ष्ण्यं निभाल्यते न । वह्निरपि रक्तं पैत्यं च बिभर्ति, तैलमपि पीतं, न ह्येतासु दीपसामग्रीषु कार्ष्ण्यं विद्यते, तस्मादस्मिन्नसितेन कज्जलेन नोभूयते, तत्किन्निमित्तं ? तत्रैकः कोविदः सभामध्यस्थितो राजानं प्रत्यूचे–भोः पृथ्वीपते ! प्रज्वलितो दीपस्तमस्ततिक्षयाय प्रभवति । यतः प्रदीपो ध्वान्तं भुंक्ते तत एषा कालिमा संजायते । लोकेऽपि श्रूयते–यादृश आहारस्तादृश एव नीहारः । अत्रायमभिप्रायो मनुजो यथा शुभाशुभं कर्म कुरुते तथैव तत्फलमश्नुते ॥ ४ ॥

उक्तं च–वर्तिस्तु धवला ज्ञेया, तैलं पीतं च दृश्यते । दीपो रक्तस्तया भाति, कज्जले श्यामता कथम् ? ॥ १ ॥
यादृशं भुज्यते चान्नं, पच्यते जठराग्निना । प्रदीपेन तमो भुक्तं, नीहारोऽपि च तादृशः ॥ २ ॥

अथात्मश्लाघी गुणिषु न गण्यते तत्र सिंहसूकरयोः ४–दृष्टान्तः—

मध्ये क्रोडमृगाधिपौ च मिलितौ प्रोक्ते हरिं सूकरो, याव त्वं कुरु रे ! मया सह हरे ! नो चेन्मया हारित ।
भुत्वा तद्वचनं हरिर्गदितवांस्त्वं याहि रे सूकर !, लोकान् ब्रूहि मया जितो मृगपतिर्जानन्ति मे शं बलम् ॥ ८ ॥

एकदा विपिनमध्ये वराहकेसरिणौ संगतौ, तदा मृगाधिपं घृष्टोऽवोचत्—हे सिंह ! बहुकालान्मां त्वं प्राप्तोऽसि, अतस्ते विवादो मया सार्धं शोभतेतु । अथ च वादं कर्तुं नो वाञ्छसि चेत्तर्हि जयपराजयनिर्णायकं वचनं व्याचक्ष्व । इत्थं निर्णये जाते सति मज, एवमाकर्ण्य कण्ठीरवो व्यचिन्तयत्—अनेन हीनसत्त्वेन सह मे विवादोऽसाम्प्रतं, एवमालोच्य क्रोडं प्रति जगाद—भो वराह ! त्वं गत्वा लोकान् भण, यदहं मृगेन्द्रं व्यजेषि। किन्तु रे क्रोड ! ये बुद्धिमन्तो नरास्ते मे वपुर्बुद्धिबलं सम्यक्तया विदन्ति ।५।
उक्तं चापि—गच्छ सूकर ! भद्रं ते, वद सिंहो जितो मया । पण्डिता एव जानन्ति, सिंहसूकरयोर्बलम् ॥१॥

अथ कुसंगप्रसंगेन मृत्युस्तत्र हंसकाकयो ५—दृष्टान्तः—

भूपो वृक्षतले स्थितस्तदुपरिस्थौ हंसकाकौ तदा, विट् काकेन कृता नृपोपरि शरं कोपान्नृपो मुञ्चति ।
लग्नं पक्षिपतेर्गतश्च बलिभुग् हंसोऽपतद्भूतले, तं दृष्ट्वाऽऽह नृपो मयोऽज्ज्वलतरो दृष्टोऽद्भुतो वायसः ॥६॥

एकदा क्षितिभरनाथो वाजिवाहनो मिगमागम द्रुमतलमधिवस्थौ । अस्मिन्नेव पादपे एको राजहंसोऽपरो वायस उभावपि पत्रिणौ स्थितवन्तौ । तयोः काले राज उन्नतशरैर्विलोक्य विश्रामकार्षीत् । पतत्पूर्वकं वायसं दृष्ट्वा सक्रोधो नृपस्तूणीराच्छरं निष्कास्य चिक्षेप । तदनीमुड्डिय तु काको, बाणेन हतो हंसो महीपतेः पुरः पपात । पश्चि तमीक्ष्य राजा, न मयैवंविधः शुभ्रो वायसो वास्तु विलो

कितः । अदृष्टपूर्व एषः, हंसस्तदोचे—राजन् ! नाहं बलिभुक्, किन्तूज्ज्वलो हंसोऽहमस्मि । परं नीचाश्रयेणेमां मृत्युदशामनु-
प्राप्तोऽस्मि । अतो भव्यजनैर्नीचप्रसंगः सदैव हेयः ॥ ६ ॥ पुनस्तदैवं हंसेनापि श्लोकोऽपाठि—

नाहं काको महाराज !, हंसोऽहं विमले जले । नीचसंगप्रसंगेन, मृत्युरेव न संशयः ॥ १ ॥

हंस तरन्तो देखिके, तुम किम तरियो कग्ग ? । तोरी यारी जे करे, तल शिर ऊपर पग्ग ॥ २ ॥

अथ नरः कृतकर्मफलमश्नुते तत्र चौरस्य ६–प्रबन्धः—

दुर्भेदाढ्यगृहेऽकरोन्निशि हरः खातं च पद्माकृतिं, तन्मध्ये क्षपितौ क्रमौ धनतृषा ज्ञातस्तदा स्वाधिपैः ।
चान्तस्थैर्ग्रहणं पदोर्निजजनैर्बाह्यैः कृतं हस्तयोः, खातान्तैर्निशितैः प्रपीडिततनुः संघृष्यमाणो मृतः ॥७॥

एकदा कस्याऽपि श्रेष्ठिनो गृहे तस्कराश्चौर्यं कर्तुमागताः । परं तद्भूम्यमपि काष्ठफलकैः जटितमासीत् । तेषामेकश्चौरः पद्मा-
कृति–कमलाकारं खात्रं कृत्वा धनगृध्नुस्तस्याऽन्तर्द्वावपि चरणौ चिक्षेप, तदानीं गृहपतिर्जजागार । तस्मिंश्चानुशायिभिर्मनुजैस्त-
त्पादयुग्मं जगृहे । ततः स सजातीयानन्यानप्याहूय निजगाद, भोः ! निगृहीतोऽस्मि निष्कासयत माम् । तच्छ्रुत्वा ते तत्करौ निगृह्य
चक्रुः । तदनन्तरेऽन्तःस्था जना अन्तर्गृहं बहिःस्था बहिश्चाकर्षन्ति । एवमुभयतोऽन्योन्याकर्षणेन कमलाकारसन्धिमध्ये निशि-
तशर्कराभिश्चौरो विव्यथे क्षतांगः संश्च ममार । तस्माज्जनेन यादृशं कर्म क्रियते, तादृशमेव फलं भुज्यते ॥ ७ ॥
तथा चोक्तम्—यादृशं क्रियते कर्म, तादृशं प्राप्यते फलम् । यथा प्राप्तं तु चौरेण, हस्तखातकृतेन वै ॥ १ ॥

तयोत्तराध्ययनेऽपि—तेणे जहा संधिमुहे गहीए, सकम्मुणा किच्चइ पावकारी ।
एवं पया पेच्च इहं च लोए, कडाण कम्माण न मुक्ख अत्थि ॥ २ ॥

अथ प्रत्युत्पन्नधिया नष्टमपि वस्तु पुनरुपलभ्यते तत्रार्थमनुश्रयो ७–कथानकम्—

कस्याऽप्याध्वनिकस्य सम्मिलितो मालुकस्तदा तस्करो, द्वे गृह्णाति तदम्बरं हितमतस्तस्याऽपतमाणकम् ।
तत्राऽऽगत्य जहा किमस्त्ययमिति प्राह स्म तस्मादिदं, स प्राहाऽस्य मुखं प्रदेहि सुमते । तेनाऽऽशु दत्तं करे ॥८॥

कश्चिदटवीमध्ये गच्छतः कस्याऽपि पान्थस्य मालुर्मिलितः । ततः स इंगितैर्मिनासुं तं विदित्वा तस्योमे मौत्रे जग्राह । ससस्तको किमपि कर्तुं न शशाक । अपि च मिथो वाग्वादे प्रवर्तमानयोः पथिकस्य वस्त्रं छिन्नं, तदा तस्य कटिस्थले सुन्दरा स्वर्णमयतलाप्यपतत् । तस्मिन् क्षणे केनाऽपि मन्त्रमविनाऽऽगत्य पृष्टं—भोः ! किमेतत् पतितमस्ति ? तदा प्रत्युत्पन्नमतिना धनात्मन्–श्रभस्य कर्णौ निगृह्याऽऽमर्दितस्य मुखादिनिर्गतं नावरूपमेतत् । तमिणदितं तथ्यमेव मन्वानः स मूढः मोचाय–हे सुमते । अस्य मुखे मामपि प्रापय । ततोऽखिलमपमेव स वदस्ते तस्मादप्रापयत् स्वं हिरण्यं च ररक्ष ॥ ८ ॥

उक्तञ्च—यामुत्पद्यते बुद्धिः, सा बुद्धिः फलदा मता । मालुकर्गौ करे दत्त्वा, पान्थेन रक्षितं धनम् ॥ १ ॥

अथ प्रत्युत्पन्नसुमतिर्नरः सर्वत्र पूज्यते तत्र ८–दृष्टान्तः—

केचिद्राजकुलं ययुस्त्रिपुरुषा भूपेन ते तत्कलाः, पृष्टा कच्छपोत्तरोत्तरकलाः पश्चात्समायां पृथक् ।
कूर्चं ते धवलितं कथं तव सितं? सोऽभ्यजरापाण्डुरं, चान्योऽस्मादितरं प्रघाषनसितं कूर्चं न मत्संगकात् ॥९॥

कदाचित्त्रयः पुरुषा भृत्यर्थं राजसमीपं ययुः । भूपस्तेभ्यः पप्रच्छ—कस्मिन् कर्मणि यूयं निष्णाताः ? तदा त्रयोऽप्यचकथन्, हे स्वामिन् ! वयं कस्याऽपि गूढप्रश्नस्याऽविलम्बमेव प्रतिवचोदायिनीं कलां जानीमहे । एतन्निशम्य भूपालो भृतिकर्मणि तान्न्ययोजयत् । अथैकदा नृपस्तान्परीक्षितुं सदसि समाहूय त्रिप्रश्नान् पप्रच्छ । प्रथमोऽभाणि भूपालेन—किं भोः ! ते कूर्चिकाकेशाः श्यामाः, मस्तकस्थाश्च सितास्तस्य किं कारणम् ? ततः स प्रत्युवाच—प्राप्तयौवनस्य जनस्य कूर्चिकाः समुत्पद्यंते । शिरोलोमानि तु जातमात्रस्यैवातो गरीयस्त्वात्तेषां शुक्लता । अथाऽपरमन्नवीत् कस्मात्ते कूर्चिका शुभ्रा, शिरः कचश्च कृष्णः ? सोऽवादीत् हे राजन् ! कूर्चिका भृशं प्रक्षाल्यते, अस्मादेवोज्ज्वला । तृतीयमप्राक्षीत् भद्र ! तव श्मश्रूणि कस्मान्न विनिर्गतानि ? तेन व्याहृतं—जायमानो वै शिशुर्मातृसमः पितृसमो वा भवति । तस्मादहं जननीमेवाऽनुगतोऽस्मि । ततो हृष्टेन राज्ञा बहुमानितास्ते सुखेन तस्थुः ॥९॥

तथा चोक्तम्—न दृष्टं न श्रुतं येन, प्रश्ने पृष्टे तदुत्तरम् । दीयते स महाप्राज्ञ—स्त्रिभिर्दत्तं नरैर्यथा ॥ १ ॥

अथ हतविधिना जनेन पुरःस्थितमपि वस्तु नासाद्यते तत्र ९—दृष्टान्तः—

काष्ठार्थं त्वधनौ च गच्छत इतो गौर्या तु दृष्टौ तदा, प्राहेशं च सुखीकुरु त्वमबले! भाग्यं तु नैवैतयोः।
तद्यूयं कुरुतेति मुंचाति तयोरग्रे यदा कुण्डलं, भूमावन्धगतिं तदाऽग्रचलतावन्धाविवापश्यताम् ॥ १० ॥

कौचिदधनौ जायापती समिन्धनमाहर्तुमगमताम् । ततस्तौ दृष्ट्वा करुणापरा भवानी भूतपतिं बभाषे—हे प्राणनाथ ! इदं निःस्वं दम्पतियुगलं वसुभाजनं कुरुष्व महेशः प्रोवाच—भो अबले ! सुन्दरि ! कथमिदं क्षीणप्रारब्धं जम्पतियुगलं शर्मभाजनं

मूर्खोक्त्याऽचेतनस्यापि कोपो भवति तत्र ११–कथा—

स्थित्वैकः कृतिहट्टके जडमतिः प्राहानृतार्थां कृतिं, हट्टस्थाः समशैलकाः सुचलिताः श्रुत्वा जडस्योदितम् ।
क्रोधात्तेऽकथयन्नरे जडमते! त्वं याहि वक्त्राग्रतो, हस्ते कोऽपि बलं ददाति हि करिष्यामो रदोत्पाटनम्॥१२॥

कश्चिन्मन्दमतिः कोविदापणे स्थित्वाऽतथ्यां गाथामवादीत् । तद्वेलायां प्राज्ञस्तु कार्यान्तरेण कुत्राऽपि गत आसीत् । परं मन्दमतिनिगदितामपगाथां निशम्य तत्र निहितानि पंचसेटकप्रभृतीनि शैलमानानि भृशं चुक्रुधुः, निगदितवंति च रे बालिश! त्वमितः प्रयाहि । वयं बुधस्य शैलमानानि स्मः, अस्मदग्रेऽपगाथां मा ब्रूहि । एवं स्थिते सति कदाचित् ब्रह्मा नः करे बलमादधीत । तर्हि ते दशनद्वात्रिंशिकां समूलमुन्मूलयेम ॥ १२ ॥ पठ्यते चाऽपि—

गाहा भणइ गमारो, पत्थरा थरहरन्ति हट्टमज्झंमि । पाडेमि दंतपंतिं, चउक्क जे को हत्थ बलं देइ ॥ १ ॥

अथ मूर्खस्य बालिशत्वं विदेशेऽपि न निलीयते तत्र १२–दृष्टान्तः—

कंचित्स्वेष्टजना वदन्ति जड रे! त्वं गच्छ तिष्ठाऽथवा, श्रुत्वा नागरिकास्तथाहुरखिला रोषाद्विदेशं गतः ।
दत्त्वाऽऽस्ये स करं जलं पिबाति तत्पूर्णोदरो मस्तकं, नार्याकंपयति प्रवीक्ष्य हि जडोऽसि प्राह कैर्लक्षणैः ?॥१३॥

कंचिन्मूढं तदात्मीया जनाः सम्बोधनवेलायां रे जड ! त्वमत्रोपविश, याहि वेति प्रवदन्ति । इत्येवमाकर्ण्य तत्रत्याः पौरजना अपि तमनयैव संज्ञया व्याहरन्ति । तस्मात्स सरोषो विदेशान्तरं जगाम । पथि नगरोपशल्ये तृषितस्तत्र भ्रमद्घट्टकं यन्त्रं दृष्ट्वा मुखे हस्तपुटमाबध्य पानीयं पातुमारेभे । उदरपूरं पयः पीत्वाऽपि लपनात्पाणिं नाऽपाकर्षत् शिरो विधूनितुं च प्रवृत्तः ।

अथ निर्घृणस्वजनात्करुणापरश्चौरोऽपि वरस्तस्योपरि १४—दृष्टान्तः—

चौरो निःस्वगृहे गतो हिमनिशि प्राह प्रियं स्वाबला, त्वत्पार्श्वेऽम्बरखण्डकं झटिति वा तद्देहि लात्वर्भकम्।
नो गृह्णाति शिशुं ददाति न तदा द्वन्द्वं च जातं तयो-स्तच्छ्रुत्वाऽम्बरकं शिशूपरि हरः क्षिप्त्वा गतोऽन्यालये॥१५।

कश्चित्तस्करः शरत्काले कस्याऽप्यधनस्य निकेतने विभावर्यां स्वं गोपितुं जगाम। तदानीं सदन उभे दम्पती अशयिषाताम्, पश्चाद्धिमव्यथिता स्त्री प्राणेशमवादीत्। त्वत्सन्निधौ वासःखण्डश्चेत्तर्हि मह्यमर्पय, हिमजडं शिशुं वा गृहाण, परं सोऽर्भकमपि नाऽगृह्णान्न चाम्बरशकलमेवाऽदात्। ततो मिथो युध्यमानौ तौ दृष्ट्वा सदयश्चौरः स्वानि वासांसि बालकोपरि प्रचिक्षेप ॥१५॥ तत्पद्यतेऽपि—

दयायुक्तो दरिद्रोऽपि, दस्युर्हि सुखकारकः, । प्रविष्टे हि यथा गेहे, चौरेणाप्यर्पितं पटम् ॥१॥

अथ कार्यसिद्धेः प्राग् द्वन्द्वोपरि स्त्रीपुंसोः १५—दृष्टान्तः—

कोऽप्याह स्ववशां च लामि महिषीं त्वं साशु नायाऽऽनय, मातुर्दुग्धतरीं ददामि हि तदाऽन्योन्यं विधत्तः कलिम्।
श्रुत्वाऽऽगत्य विशारदेन हि घटा भग्ना महिष्याऽऽद ते, क्षेत्रं मे यदि भक्षितं न ललने! यूयं कथं युद्ध्यथ।१६

कश्चिन्नरः स्वायत्तां सीमन्तिनीमूचे—हे प्रिये! महिषीमहमानयामि। तदा जाया जगाद—भो भर्त्तः! क्षिप्रमाहरत्युदीर्याऽवक् यदहं महिष्याः पयः पूर्णां क्षीरसन्तानिकां स्वजनन्यै प्रदास्यामि पत्या चोक्तमहं भोक्ष्ये। एवमुभयोरपि वाक्कलहः प्रादुर्बभूव। तत्क्लेशप्रशमकः कश्चित्सुधीस्तत्राऽऽगत्य सदनमध्यस्थापितानि मृद्भाण्डानि बभञ्ज। तदा स्त्रिया सोऽभिहितः—भोः! कस्मादमूनि

पात्राण्यमोघी ? ततोऽन्यथापि तेन–भरतरेशेन तव महिम्ना ख्यातिम् । ततो तामपि कथं प्रशाम्य कथितुमारेभाते । भगो !
महिषी काऽन्नामिताऽसि सांप्रतम् । ततः प्रश्नेनोक्तम्–महिम्ना ख्याते दुग्धवरीक्षुदिस्य कस्माद् विमनस्को युवाम् ? तत्रापे
तेनोमावपि विप्रलापं हिवर्कं मन्यमानो सर्वत्र हास्यजनकं निष्प्रयोजनं निष्फलं तरितं विहाय मिथो भवानुरागावस्थाम्॥१६॥यतः–

दोहा–घरे भैंस आणी नहीं, मांग्या मांका सात, झगड़ो तो दम्पती करे, दूध तरीनी वात ॥ १ ॥
पछे तो झगड़ो सुणी, पण्डित आयो दोडि, झगड़ो तेणे भांजियो, डोवर सघला फोडि ॥२॥

अथ कौतुकिनः सविधे विदुषोऽपि विद्या मोघा भवति तत्र १६–दृष्टान्त–

भूपान्ते प्रविणेच्छया कृतिगमे दत्तं न किञ्चित्कदा, वीक्ष्येषो नटनाटकं बहुधनं तस्याशु सोऽदात्ततः ।
गेहेऽयद् स्वजनास्तु तत्र पठने यत्नस्तु कार्यो विदा, कर्तव्यं नटनाटकं च भवतां द्रव्यं नृपो दास्यति ॥ १७ ॥

कश्चिद्वो द्रविणेच्छया कस्याऽपि धरणीधवस्य सकाशं सेवितुं गतः । दर्घोऽपि सेवमानस्य तस्य धना धस्ता क्वापीयुः । परं
किमपि नोऽपि नाऽऽकारितः । एतस्मिन्नन्तरे जातु नृपतिर्नटानां नृत्यं च निभाल्य प्रीतः सन् भवतं स्वं ददौ । इत्थं प्रसङ्गमवरित
क्रमे । पठमानकाव्यच्छन्दोऽलंकारादीनध्येतुं किमर्थं परिभाव्यत, यतस्तेभ्यो न प्रसरस्वति क्वापि प्रमानाथः । किन्तु
नटनाटकादीननुशीलयिष्यथ तर्हि राज्ञः सकाशादनन्तं द्रविणमाप्स्यथ । यतः सारासारविवेकक्षमो नास्ति महीपालः, किन्तु
चेतुकीयमपरः ॥ १७ ॥ उक्तं च—

विद्वांसः ! सावधानाः शृणुत मम वचो द्रव्यलोभार्थिनश्चे, द्रन्तव्यं सादरेण क्षितिपतिभवने भूपसेवां विधातुम्।
विद्वांसः ! सावधानाः शृणुत मम वचो द्रव्यलोभार्थिनश्चे, शिक्षेतव्यास्तु शिष्याः ! धिगधिगधिग तां ताथयीति प्रशब्दाः
मीमांसान्यायतर्काऽऽगमविधिबहवो दूरतो वर्जनीयाः, शिक्षेतव्यास्तु शिष्याः
भावी भवत्येव तत्र नरकपालस्य १७—दृष्टान्तः—

कनेभ्येन बहिः स्थितेन नृशिरो दृष्ट्वाऽऽर्थकाऽवाच्यत, लात्वा सद्मनि तच्छिरः प्रतिदिनं तत्पश्यति ह्येकदा ।
तत्पिष्ट्वा वटिका कृता निजपतेर्भुक्तात्ति सोऽवक् शुभा, स्वेष्टं यत्त्व भवद् वरांगि ! लिखिते दोषो न ते मे वशो
एकदा बहिर्यातेन केनाऽपि श्रेष्ठिना शवभुवि पतितं नरकपालं ददृशे। तत्र लिखितगाथावाचनानन्तरं तत्कपालमानीय स्वपेटायां
संस्थाप्य तत्कपालं प्रतिदिनमेत्य समपश्यत् । एकदा तत्पत्न्या विलोक्य चिन्तितम्—निजगृहे असावस्माकं स्वामी प्रतिवासरं किं
वस्तु वीक्षते ? तदा पश्यन्त्यास्तत्र शवकपालं दृष्टिपथमयासीत् । ततो रोषपरीतमानसा सा तत्कपालमादाय तत्तु संपिष्य
तस्मिन्नन्यानि तद्योग्यवस्तूनि मेलयित्वा वटिका व्यरीरचत् । ततस्तया स्वभर्त्रे शाकं निर्मितमशनवेलायां तत्स्वादमास्वाद्य तत्पतिः
प्रीतः सन्नाचचक्षे। यदिमा वटिकाः स्वादुतमाः संपन्नाः । कस्येमाः संस्कृताः ? तदनु तयोक्तम्—यद्भवतः प्रियतरमासीद्यं च पुरो
धृत्वा पश्यति स्म, तस्येमा वटिकाः सन्ति । धनिकोऽवदत्—भो ललने ! यल्लिखितं तद्वृत्तमत्रावयोर्नास्ति दोषलेशोऽपि ।
पश्चात्सीमन्तिन्या आमूलचूलतः सर्वमप्युदन्तजातं निवेदितम् ॥ १८ ॥ सांप्रतं कपाले यल्लिन्यस्तमासीत्तदभिधीयते । गाथा—

जम्मो कालिंगदेसे, पाणिग्गहणं मरुदेसमज्झंमि । मरणं समुद्दतीरे, अज्ज वि किं ते भविस्सइ ॥ १ ॥

अथ कविः प्रश्नक्षण एव प्रतिवक्ति, तत्र १८–दृष्टान्तः—

पृष्टः केन गुरुर्हि लिपति मनो नेत्रं कथं रोदिति ?, प्रोचे तं च गुरुर्मनोनयनयोर्मो व्यञ्जनावग्रहः ।
चेदाक्षमकरः पृथग् भवति तद्रूर्ध्वं मनोनेत्रयोः, मत्स्यैकत्र स्थितो समस्तुखं जनाति दुःखं तयो ॥ १९ ॥

कश्चिच्छात्रो गुरुमप्राक्षीत्–भगवन् ! यदा चित्तं विषीदति, तदा चक्षुषा कथं रुदते ? तच्छ्रुत्वा गुरुणाऽभिहितम्—श्रोत्रघ्राणरसनास्पर्श इति चत्वारीन्द्रियाणि यदा पुद्गलमास्पृशन्ति तदा विषयावबोधे प्रभवन्ति, तस्मात्तद्व्यञ्जनावग्रह इत्युच्यते । मनःकरणचक्षुषोर्विषयः पुद्गलसर्शमन्तरेव भासते, व्यर्थावग्रह इत्युच्यते । तस्मान्मनश्चक्षुषोश्च प्रीतिसम्बन्धो भूयांस्ततो यदा मानसेन निर्विद्यते तदा लोचनेन रुदते । यथैकस्मिन् सदने निवसन्तौ द्वौ मनुजाविकस्यैकस्य दुःखे प्रसादे च समवेदनौ भवतस्तथैवान्तःकरणनयनयोर्मैत्रमप वासस्थाने ॥ १९ ॥ तदुक्तम्—

सिद्धान्तशास्त्रकेष्वस्ति, नास्ति वा हि तथाऽपरे । सम्यक् प्रश्ने कृते शीघ्रं, प्रदद्यादुत्तरं कविः ॥ १ ॥

अथाऽज्ञातकुलशीलाय वासो न देयस्तत्र यूकामत्कुणयोः १९–दृष्टान्तः—

सुप्तो राज्ञ निशि मत्कुणो मत इतोऽमूकया वारिता, प्राघूर्णोऽस्मि तवेति मातृभगीनि । प्रोचे तया मानितः।
तेनैषो दंशितस्तदा नृपतिना शय्या हि चालोकिता, लब्धा षट्पदिका हि मत्कुण इतस्तेनाशु सा मारिता॥२०॥

कस्याऽपि राज्ञः पर्यङ्के मन्दविसर्पिणी नाम यूका निवसति स्म । तत्रैको डुन्डुकनामा मत्कुणोऽभ्येत् । तमालोक्य यूकयोक्तम्—

भोस्त्वमत्र मा प्रविश। निद्रानिमग्नोऽस्माकं स्वामी शेते। तदा मत्कुणोऽवादीत्-अये! अहं तव गृहे प्राघूर्णकः समायातोऽस्मि। अथ च त्वम्मे मातृष्वसाऽसीति कृत्वा प्राप्तोऽहं। अथाऽविमृश्यैव यूका तत्प्रवेशमादिदेश। मत्कुण उपक्रामन्नेव विशांपतिं ददंश। ततो नरपतिना शय्या दर्शिता तु मत्कुणः पलायितो, यूका सरला वराकी करे पतिता, नृपानुगैः करेण हता, अतोऽज्ञातकुलशीलो मधुरां वाचं वदन्नपि स्वान्तिकं न प्रापणीयो यश्च तं विश्वसेत्तर्हि मत्कुण इव स स्वात्मदोषं तस्मिन्निक्षिप्य तमेव नाशयेत॥२०॥ यदुक्तम्—

अज्ञातकुलशीलस्य, न दातव्यः प्रतिश्रया। ढुन्ढुकस्याऽपि दोषेण, हता मन्दविसर्पिणी॥ १॥

अथ च्छलेन मुग्धा लोका वञ्च्यन्ते परैस्तत्र २०—दृष्टान्तः—

गुर्विण्यां निजयोषिति क्षितिपतिर्विप्रं तदा पृच्छति, पुत्रः किं च सुता भविष्यति हि मे? पुत्रो नहीत्यंगजा। संलिख्य च्छदने ददौ नरपतेः पुत्रो भविष्यत्यथ, पुत्री चेदुत वाशु दीर्घलघुकान् वर्णांस्तु वक्ष्ये तदा॥२१॥

कस्याऽपि भूजानेः सुतो नाऽभवत्, परमेकदा तत्पुण्यप्राबल्यसंयोगेन महिषी अन्तर्वत्नी समजायत। तदा राज्ञा कश्चिद् भूसुरः पृष्टो द्विजवर! मम पत्न्या जठरे पुत्रो भविता वा पुत्री? तदा व्याजेनावादीद् द्विजः—भो राजन्! कर्गले कृत्वाक्षराणि तव प्रदास्यामि, नृपस्तदुदीरितमुररीचकार प्रीतश्चाऽभवत्। ततो विप्रश्चिन्तयामास—'पुत्रपुत्र्योर्मध्ये केनाऽपि भवितव्यमेवेति विविच्य' पुत्रो न पुत्रीति विलिख्य राज्ञे कपटलेखमर्पयत्। यदि पुत्रश्चेत्तर्हि 'न पुत्रीति स्पष्टमेवोक्तम्,' अथ पुत्री जायेत, तदापि पुत्रो नेति पठनीयमुभयतोऽपीष्टसिद्धेः॥२१॥ तथा चोक्तम्—

अज्ञाना बहवो मर्त्या, दृश्यन्ते छलकारकाः। छलं कृत्वा यथा राज्ञो, दत्तं लेखं द्विजेन वै॥ १॥

अथाऽस्थाने पात्रकथाश्रा मोघा जायते, तत्र २१—कथा—

द्वारस्थं गजचित्रकं वालिरिहाऽऽज्ञानस्य दृष्ट्वाऽऽगतः, तन्मुण्डे स्थितवांस्तदाह कविराड् व्यात्वाऽऽशु तं षट्पदम्।
अत्राऽऽलेक्षि कथं स्थितोऽसि जड रे! दानप्रदा वारणा स्ते सर्वेऽपि वने वसन्ति च गिरौ त्वं तत्र याहि द्रुतम्।२२।

कश्चिन्मधुकरो द्वारदेशे चित्रस्थं करिणं विलोक्य विवेकवैकल्यात् मदमन्यमानस्तु तत्राऽऽसीत्। अथ च गजगण्डस्थलमासीनः कर्णं शुश्रुव। तस्मिन् क्षणे कश्चित्कविः स्वात्मनि विचार्य भ्रमरं वक्तुमुपचक्राम। रे मूढ मधुलिट्! त्वं कस्मादत्र निषण्णोऽसि, यस्मात्ते भयोचितं न सेत्स्यति। मदप्रदायको वारणो नाऽसौ, दानवारिमुचः सर्वेऽपि गन्धहस्तिनो विपिने क्ष्वेषु वा वसन्ति। करिदानगन्धलिप्सा चेत्तर्हि मंक्षु तत्रैव प्रयाहि ॥२२॥ गीतमपि—

रे चञ्चरीक! मदलोलकपोलवासी, भित्तिस्थनागवदनेऽत्र कथं स्थितोऽसि ?।
ये दानदा घनघना घनघोरशब्दा—स्ते वारणा वरतरा विपिने वसन्ति ॥ १ ॥

अथ मूर्खैः सह धीमतां वादो न युज्यते, तत्र तयोः २२—कथा—

मूर्खौ पथि गच्छतः कुसुमितं ताभ्यां पलाशद्रुमं, दृष्ट्वा वक्ति हि पाटलं जडमतिश्चान्यो मूर्ख! भो पाटलः।
वादं तौ कुरुतो जडेन सुकविर्पृष्टयाधिभिस्ताडितो, यच्छया मुष्टिवशात् विमुञ्च जड रे भो! पाटलापाटला।२३।

पुरा कदाचित् वणिक्पुत्रौ वर्त्मनि भ्रमतः स्म। तत्र मार्गमध्ये पुष्पितः किंशुकपादपो व्यलोकि। तदा द्वयोर्मध्ये कि

एष पाटलः कथं कुसुमितः फलितश्च ? । तन्निशम्य बुधोऽवदत् रे मातृशासित ! एष पालाशविटपो, न पाटलः । ततो मन्द ऊचेत्वं किं जानीषे ? एष तु पाटलः। इत्थं मिथो विवदितुं प्रारेभाते। ततोऽतीव रोषविवशो बालिशो यष्टिमादाय प्राज्ञं हन्तुमुद्यतस्तदानीं पण्डितेनाऽवादि—भोः ! कथं मां तुदसि ? अथ च कविरपि पीडनवशात्पाटलः पाटल इति मुहुर्व्याजहार॥२३॥ अत एवोक्तमपि—

पलाशं पुष्पितं दृष्ट्वा, मूर्खो वदति पाटलम् । यष्टिमुष्टिप्रसादेन, ज्ञोऽवक् पाटलपाटलः ॥ १ ॥

मूर्खदम्पत्योः कदाचरणोपरि तयोः २३—कथानकम्—

लात्वा स्त्रीं पथिको गृहात्प्रचलितो ह्यग्रे सनीरां नदीं, दृष्ट्वा साऽऽह धवं ममांघ्रियुगले रंगोऽस्ति संगृह्य सः ।
तस्याः पादयुगं हि कर्षति सरित्तीरे गतः सा मृता, न्यस्ता मूढ ! कृतं किमाह मतिमान्नष्टा न रंगस्थितिः ॥२४॥

अथ कश्चिदाध्वनिकः स्वकान्तां श्वशुरसद्मनः समादाय स्वावासं प्रति प्रस्थितः । मार्गे यान्त्या सरित्प्रवाहं प्रपश्य प्रियया स्वामिनं प्रत्युक्तम्—भोः प्राणनाथ ! ममाऽङ्घ्रियुगले निषक्तो रंगो यथा नापमृज्येत तथा विधीयताम्। तदनु ना तच्चरणावुत्पाट्य करनासं जले न्यस्य चलितः। यावत्स स्रवन्तीपारं प्राप्तस्तावदेव सा नासाऽऽस्यश्रुतिषु पयःपूरेण कीनाशनिकेतनमभ्यैत्। तदा गतासुमहिषीमिव समाकृष्य सरित्तटमानिनाय । तत्र स्थितः कश्चिद्धीमान्नरस्तमचकथत्—रे मूढ ! किमेतदनुष्ठितम् ? यस्मादेषाऽचेतना संवृत्ता। तस्मात्कथमेनामधोमुखीं नीरमध्यादानीतवानसि। मन्दप्रज्ञेनाऽप्यवादि—यदहं कृतवानस्मि तदवगत्यैव यद्यपि ममार सा परं तच्चरणयो रंगस्थितिस्तदवस्थैव ॥२४॥ कथितञ्चाऽपि—

मूछुरि मारी प्रिया, गया मदीरे तीर । देख अन्य नर थांमियो, कां कीना अब पीर ? ॥ १ ॥
मूड तेह मति पोलियो, कीधो पह प्रकार । जीव गयो पण रंग है, सुख मन एह विचार ॥ २ ॥

भाग्यरहितो यत्र गच्छति तत्रैवापदो यान्ति तत्र २४–कथा—

ग्रीष्मे पथुरयो घने दिवसमः प्राप्तोऽर्कविपा पीडितः, छायां वीक्ष्य गतोऽपि बिल्वसुतले तस्के फल प्रापतत् । तच्छ्रुत्वा पततीति चिन्तति तदा यामि क मग्नं शिरो, दुःस्थो गच्छति यत्र याति तदनुच्छायेव शीघ्रं विपत् २५

कश्चिमि सः खल्वाटो निदाघकाले निर्गता भानुभानुभिर्भाले संतापितोऽध्वनाप्यस्मिन्पान्थो बाधितो भास्करपादपस्याऽवस्थान्पसीदत् । तदनन्तरं शिरेण घनं बिल्वफलमभिस्फाटमपतत् । अथ चिन्तयामास–क्वाऽधुना व्रजामि ? खल्वाटत्वपतासेन ग्रस्तो विरपुरमुपागतस्तत्राऽपि फलपातेन मे शिरो भग्नम् । दैवहतकस्य मे पृष्ठे छायेवानुगच्छति विपदः ॥ २५ ॥ तथाप्युक्तम्—

खल्वाटो दिवसेश्वरस्य किरणैः सन्तापितो मस्तके, वाञ्छन् देशमनातपं विधिवशाद् बिल्वस्य मूलं गतः।
तस्योपैः पतता फलेन महता भग्नं सशब्दं शिरः, प्रायो गच्छति यत्र भाग्यरहितस्तत्रापदां राशयः ॥ १ ॥

भाग्यवतः प्राणिनः स्वेष्टवस्तुनः प्राप्तिर्भवत्येव तत्राख्यः २६ कथानकम्–

क्लिष्टः केन करण्डकेऽपि भुजगः क्षुत्पीडितोऽन्नाशको, रात्रौ खादिमकाङ्क्षयाऽऽखु विवरं कृत्वाऽङ्कुरस्तन्मुखे ।
भाग्यादेव तदा स्वयं निपतितस्तन्मांसतृप्तोऽभवत्, यतस्तेन यथा क्षणो स्थिरतरं भोऽपि च भाग्यं भवेत् ॥२६॥

कश्चिद्गारुडिकः फणिनमेकं निगृह्य करंडके न्यधात्। तस्मिंश्च क्षुद्बाधितस्तृषार्तश्च जीवने हताशः सन्नास्त। तस्मिन्नेव क्षणे कश्चिदुन्दुरुरागत्य खाद्यं द्रव्यं विज्ञाय करंडकं भित्त्वा प्राविशत्। प्रविष्ट एव भुजंगो दैववशात् स्वाशनमुपलभ्य तेन सुहित आखुकृतविवरेणैव निष्क्रान्तो यथेच्छं जगाम। अहिरिव व्यसने पतितस्यापि स्थिरनियतेर्नरस्य शातमेव संपद्यते। भाग्यस्थैर्यं नाम धृतिपरिपालनं ॥ २६ ॥ सूक्तं केनापि—

नो कार्या पुरुषैश्चिन्ता, निगडे पतितैरपि। यद्भाले लिखितं धात्रा, भवेद् भोगीव नापरम् ॥ १ ॥

बहुसम्मतिके कार्येऽविचार्योत्तरदानेऽनादरो भवति तत्र २६–दृष्टान्तः—

नत्वा पृच्छति कार्षिको निजगुरुं वर्षा न वा वर्षति, क्षेत्रे ते निशि वक्ति सोऽपि न परे लात्वा सशिष्यो घटान्।
कूपात्सिंचाति कं परा हि मनुजाः श्रुत्वेति वार्तां गुरो–स्ते पृच्छन्ति तथा ब्रवीषि वहसि प्राहुर्विनेयास्तदा ॥२७॥

कश्चित्कृषकः स्वगुरुं प्रणम्य पृच्छति–भगवन्! देवो वर्षिष्यति न वाऽस्मत्क्षेत्रे सर्वमप्युप्तं धान्यं शुष्यति। गुरुरुवाच–भो! अद्य ते केदारे मेघो वर्षिष्यति, परमन्येषां न विजानामि। अथो सशिष्यो गुरुर्यामिन्यां शस्यक्षेत्रे अन्धोर्जलकलशमापूर्य आरात्रं क्षेत्रं परिषिषेच। ततः क्षेत्रपतिः स्वं केदारं सिक्तं विलोक्य तुष्टोऽभवत्। अमुमुदन्तं परे जनाः समाकर्ण्य गुर्वन्तिकमुपेत्य यथापूर्वं नतिं प्रकल्प्य पप्रच्छुः। तदा गुरुणाऽपि तेभ्यः पूर्ववदेवाऽभिहितम्–तन्निशम्य विनेया अपि गतशर्वरीवाऽद्यापि क्षेत्रसिञ्चनं विधातव्यमिति विज्ञाय गुरुं गदितवन्तस्ते–यो वक्ष्यति स एव विधास्यति। नास्माकं कापि क्षतिः ॥ २७ ॥ पठ्यतेऽपि—

उपानहौ मया दत्ते, जीर्णे कर्णविवर्जिते । तत्पुण्येन गजारूढ-स्तद्गतं यन्न दीयते ॥ १ ॥

अथ मायाविषु मायिभिर्भवितव्यं तत्र २८-कथा—

पर्षद्यन्यकविः करोत्यभिनवं भोजस्य काव्यं तदा, श्रुत्वाहुश्च पुरातनं कविजना भूयोऽपि किं तेऽपठन् ।
राज्ञा तैश्च तिरस्कृतः प्रतिदिनं वादोऽभवच्चैकदा, कृत्वा वेधयुतं स्थिता विमनसो लक्षं च लात्वा गतः॥२९॥

कदाचिद् भोजराजस्य परिषदि कोऽपि नव्यः कोविदः समाययौ। स प्रत्यहं भोजराजं नृपं श्लोकैरुपश्लोक्याऽऽशीर्वचोभिरै-
धयत् । परं तन्निर्मितपद्यानि कल्मषधिया संसदि निषण्णाः कालिदासादयः कवयः प्रतिघस्रं प्रत्याख्याय क्षिपन्ति स्म । अथ
च महीपतिमुक्तवन्तः—राजन् ! कवेरस्य कृतिः पूर्वकविकल्पितैव, एतत्काव्यं त्वस्माभिरपि प्रागेव स्मृतिविषयतां नीतम् । तदा
धाराधिपेन भोजेन पृष्टास्ते श्रुतधराः कालिदासादयः कवयः कण्ठतः समुदाजह्रुः । तदानीं नृपः सुकविमवमत्य बहिश्चकार,
एवं नित्यं वाक्कलहः प्रावर्तत । ततः पण्डितोऽपि स्वापमानेनाऽन्तर्दग्धो वेधयुक्तं काव्यं चक्रे। स्वकाव्योच्चारणेऽक्षमांस्तान् कालि-
दासादिकवीन् क्षीणप्रमान् कृत्वा नृपतिसकाशाल्लक्षं द्रव्यं जग्राह ॥ २९ ॥ तत्कवेः सैषा कविता—

भोज! त्व राजराजः क्षितिपातितिलको धार्मिकः सत्यवादी,पित्रा ते या गृहीता नवनवतियुता हेमकोट्यो मदीयाः।
त्वं ता देहि त्वदीयैः सकलबुधजनैर्ज्ञायते सत्यमेतत् ,नो जानन्ति त्वदीयाः सकलबुधजना देहि लक्षं तथापि॥१॥

तदर्थः—भो भोजनृपते ! त्वं राज्ञां मध्ये स्थासक इव, धर्मिष्ठः सत्यवक्ता चाथ निजान्वयस्य सुषमाकरोऽसि, परं तव तातेन

या मे नवकोट्यो दीनारा गृहीतास्तांस्त्वं प्रयच्छ । तदुक्तं ते परिषज्जनाः श्रेष्ठिनो विदन्ति, यदि चेमां वार्तां तव विश्वासो नो जानन्ति, तथापि सर्वं द्रव्यं देहि । अथमन्त्रामित्रैरुक्तं—यदि चायं पुराणः श्लोकस्तर्हि नवनवतिकोटिसौवर्णान् देहि । पैशानि- कः स्यात्तथापि सर्वं देहि ॥ १ ॥

अथाऽत्र भवेऽदत्तमृणं परभवेऽपि दानं विना न मुच्यते तत्र २९–दृष्टान्तः—

भोजपुर्यां हि धिषणाय पारमार्थिके तैलपालये च स्थितो, वृत्तान्तं प्रतिकर्ण्य स स्वनकुटोरेत्य दृष्ट्वा प्रभातेऽखिलम् । गत्वा भोजगृहं समर्प्य सकलं भाण्डारिकाणां धनं, तान्मोचे तदृणं क्षमोऽन्यभाविकं दातुं न गेहे गतः ॥१०॥

कश्चिदेवं चिन्तयामास, यदस्मिन्भवे रात्रं सार्वं वा परत्राऽन्यभवे भवेयं च न भविष्यतीति मत्वा तेन भोजभूपालमुपेत्या भिहितं, यदस्मिन् भवने तुभ्यं सकृसीदं धनं याचनास्ये । यदि नियोगमेतस्य कृत्वा समर्पयामि, इत्युक्त्वा तेन विन्यस्य राज- कोषागारिकेभ्यो सर्वं वित्तमादाय यामिन्यां तैलिकागारे सुप्तः । तत्र निशीथे तैलिकबलीवर्दौ मिथः समभाषेताम् । तयोरेकस्यैतेऽ- वदस्माभिः पूर्वभवे गृहीतवित्तमप्यावेदं पणकं देयमस्ति । तदहं चतस्रो प्रभातः कृत्वा मृत्वा विमोक्ष्ये, परलोके च सुखं प्राप्स्ये । तदेवापर ऊचे–धन्योऽसि त्वम्, मया तु तैलिकस्याद्यापि उपमुद्रा भवेयाः सन्ति । अथ च राजा भोजो मे पूर्वजन्मनोऽधमर्णः । निद्रित एव वणिक् प्रगे भोजराजान्तिके गत्वा वदेत् । यथा वारणमुख्येन साकमस्य तैलिकवृषस्य प्रतियुद्धं भवेत् । यदि नृपो अपेक्षाहि स्वपार्श्वे उपरूप्यकाणि देयानि । एवं समयं कृत्वा गजमुख्येन सह मां प्रतियोधयेत्तर्हि जित्वा तं तैलिकवृषराजवान् यशापाऽनृणो भूत्वा प्रेत्य चैव शर्मभाजनो भवामि । इमां वार्तां श्रुत्वा स वणिक् प्रभाते प्रभुप्य पयकाधमर्णस्यानडुहो गदितमुदन्तं

यथातथमपश्यत् । तदानीं मनसि विचारयामास—प्राप्ते जनने गृहीतं स्वं देयमेवेति मतं सम्यग् निर्णीय मनसि निकषा भोजनृपं प्राप्तो रात्रिवृत्तमामूलतः समचकथत् । अथ चान्यजन्मनि त्वदृणेनाऽनृण्योपायं नाऽवलोकयामि । तस्मात्स्वमर्थं प्रत्याहर, अहं तु भृतिकर्मणा स्वजठरं पूरयिष्यामि । एवं निवेद्य समाहृतं स्वं कोषाध्यक्षाय ददौ । पुनश्च करिमुख्येन सह ककुद्मन्तं योधयित्वा तैलिकऋणादनृणं चकार ॥ ३० ॥ उक्तं च दोहा—

इह भव देणुं दोहिलुं, परभव वली विशेष । बलद कथाने सांभली, तजियें ऋणो अशेष ॥ १ ॥

गाथा-दासत्तं देइ ऋणं, आचिरा मरणं पुणो वि संपण्णे । सव्वस्स दाह मग्गी, दिंति कसाया भवमणंतं ॥२॥

अथ पांशुला जीवदानादपि स्वीया नैव भवति तत्र ३०—दृष्टान्तः—

प्रीत्या तेऽपि सह त्वयाऽद्य निधने धक्ष्यामि संकेतकृत्, तत्सर्वं रचितं सुरैर्यदि तदाऽर्द्धायुश्च दत्तं स्त्रियै ।
मुक्त्वा सापि तमन्यपत्तनगता तस्मिन् पुरेऽसौ गत—स्तद्भार्या मिलिता तदा च कुटिला स्वार्थं विनाऽनर्थकृत् ॥३१॥

कश्चिन्मनुजः प्रेम्णा निजजायया सार्धं मिथो भाषमाणः समयमकार्षीत् । यत्तव निधनं मत्तः पूर्वं चेत् ज्वलने त्वामहमनुसरिष्यामि । तत्पश्चाद् भार्ययाऽप्यभाणि—यदहमपि त्वद्दते वह्नावात्मानं होष्यामि, इत्थं परस्परं निश्चिक्याते । तदखिलमुदन्तजातं कश्चिद्देवः समश्रुत, ततः स देवः स्त्रियं गतासुमकरोत् । तदानीं स पुरुषः समित्समिद्धे ज्वलने प्राणान् होतुमुद्यतः, तस्मिन्नेव क्षणे देवः प्रभूतं वर्षित्वा वह्निं निरवाप्सीत् । तदनन्तरमक्षतस्य पुरुषस्य स्त्रिया आयुषोऽर्द्धभागं ददौ । अथ तत्पत्नी स्वभर्तारं विसृज्य पारेसमुद्रं विषयान्तरं जगाम । पुरुषोऽपि देशाद्देशं परिभ्रमन् तस्मिन्नेव नगरे निजभार्यां दैवात्प्राप । तदानीं व्रीडयाऽधोमुखी

चश्च, यतः परित्यज्य स्वामिनं पलायामके । तत्र स्त्रीचरित्रं प्रकटयन्ती स्वभार्यासि परिच्छिद्य च पूत्कृते—यदयं नरो मम सतीत्वं भ्रंशयति, तमिशम्य राजपुरुषास्तं निगडे बध्वा शूलमारोहयामासुः। एवं पुंश्चल्या तया सार्धमन्तरेणाऽप्यारितमकारि ।२१। उक्तमपि—

चतु करिये उपकार मी, योग न माने जेह । अरधुं दीधुं आवखुं, तेनी थई न तेह ॥ १ ॥

अथ यल्लिखितं ललाटफलके मूनं तदाप्तिर्भवेत्तत्र ११—कथा—

दारिद्र्यमपलान् सदाऽस्ति भगिनी सोऽचिंतयन्मेऽस्ति हि, मिष्टान्नेच्छिकया स्वसुर्गृहगतो भ्रातुश्च दर्पान्विता । शुष्कस्वयं पतिता गृहेऽपि चपलाः स्थाल्यां तदा मुञ्चति, दत्त्वा स चलिके करं चलति तां रात्रौ गता येऽन्यतः॥२२॥

कश्चिद् दुर्गतोऽर्दितं चणकान् खादति स्म। एकदा चणकानश्नतस्तस्य छर्दिरभवत्, तदा सोऽचिन्तयत्-अहो! कष्टमापन्नोऽस्मि। चणान्नित्यभक्षितस्तया प्राघुणिको भूत्वा भगिनीनिकेतनमभ्यगात् । तत्र भ्रातरं वीक्ष्य भीता सा भोजयितुं चणकान् रसवत्यां संरराध, भोजनवेलायां च भ्रातुः स्थाल्यां चणकान् परिविवेष । तान् विलोक्य विषण्णो भ्राता भाले पाणिं न्यस्य भगिनीमवादीत्—यभिज्ञायामेव मदागमनात् प्रागेव चणकास्तवगृहमागममिति तर्कयाम् ॥२२॥ दोहा—

में लीधो छे मदसमो, चोले लीधी रात । पथी भागो भावियो, भगिनी ! थोडा लात ॥ १ ॥

देश तजी परदेश भमे, भरे घणी मन आस । सरज्यो ते नर पामिये, चपला पखिया पास ॥ २ ॥

यः पापं विधाय पश्चात्तापं कुर्यात्स सुखी स्यादन्यथा दुःखी तत्र राजसोचे भ्रजतोर्मामीणयोः १२—कथा—

हर्म्यारोहणवारितं नृपतिना भृत्यः कथं कार्यतां ?, ग्रामं गच्छति मुच्यतामिह गतौ ग्राम्यौ तदाऽऽक्रोशितौ ।
वक्त्येकः किमु ? मारितोऽपरनरो भीत्याऽऽशु मां रक्षतु, गत्वाग्रे यदि गम्यतां त्वरगतेर्मुक्तः सुखी सोऽभवत् ॥२३॥

केनाऽपि भूभृता वाटिकाया मध्ये सौधः कारितः स्वनियोज्यांश्च समादिदेश—यत्कोऽप्यस्मिन्भवने न प्रविशेत् । तदा द्वाःस्थैः पृष्टम्—अजानन् कश्चित्प्रविशेत्, किमु तस्य विधेयं ? तदानीं नृपोऽब्रवीत् सोऽपि हन्तव्य एव न तु मोच्यः । तन्निशम्य दौवारिकाः सप्रश्रयं निवेदयामासुः—राजन् ! कठोरोऽयं दण्डः । तदनु नृपः समचकथत्—यदि प्रवेशकः प्रतीपपाद एव व्रजेत्तर्हि स हेयः । एकदा प्रस्तावे द्वौ ग्राम्यजनौ विस्मृत्य तत्राऽऽजग्मतुः । तदानीं राजपुरुषैर्निगृहीतयोस्तयोरेको वाचाटो जीवनाशं नष्टोऽपरो भयभ्रान्तो मां त्रायध्वमित्यभाषत । अथ च प्रतीपगमनान्नृपानुचरैर्विसृष्टः स्वबान्धवेषु प्राप्तः सुखमुवास ॥२३॥ उक्तञ्चापि—

पापं कृत्वा पुनः पश्चात्, यो निन्दति नरोत्तमः ।
स सुखी जायते लोके, यथैको हर्म्यवीक्षकः ॥ १ ॥

अविचार्य मन्दधिषणे विश्वासवाक् न देया तत्र २३—कथानकम्—

भूपाऽऽभीरसुते सदाभिरमतो रोदित्यभीरांगजा, वक्त्याः ! रोदिषि किं ? भवद्विरहतः सत्यं धवैको हि नौ ।
यास्यागच्छसि विट्समं निशि सखे मार्गे मिलित्वा गता, श्रुत्वार्याश्चलहेतुकां वरमतो ज्ञात्वा गता स्वालये ॥२४॥

एका राजकन्याऽपराऽऽभीरकन्या चोभे सख्यावास्ताम्, मिथः संगते चिक्रीडतुः । एकदा बाष्पं विमुंचती साऽऽभीरबाला नृपकन्यया पृष्टा—किन्निमित्तं रोदिषि ? अथैनां सा बभाण—राजसद्मनि परिणीता बहिर्निष्क्रमितुमक्षमा सती त्वं मया सह नोपस्थास्यसे, तत्त्वद्वियोगपीडिता रोदिमि । तदानीं राजदुहिताऽपि तस्यै यो हि त्वद्भर्ता ममापि स एव, इत्थं वचनं ददौ । जाताभीर-

बालिका केनाऽपि युवकेन साकं गन्तुं प्रवृत्ता, तस्यपे तया प्रतीपसुताऽभ्यादि—त्वमनेन सत्रा व्रज। पश्चात्सा प्रथमोदितवचनवा पिता तेन सह नगराभिमुखमक्रम। अग्रे गच्छतां तेषां पटीपत्रपालकः सम्प्रुमातस्वदास्यादाप्रपष्टान्तं निशम्य सुवाना मृगकुमारी स्वनिकेतनाय निववृते ॥२४॥

दोहा—कालुं गोकुं मुख करी, रत्तडा पपो अशास। तें फळ दीधे कवण गुण!, जो फळ दिये पलाश ॥ १॥
सुरतरु आणी सेविआ, तूं तो निगुण पलाश। जब तें मुख काळो कियो, तब मैं छोडी आश ॥ २॥

अथ महतामनुकारी नीचोऽपसीदति तत्र २५—दृष्टान्तः—

काऽरण्येऽग्निभयाद्भदे पतति वै सिंहादिजन्तुमजा, शान्ते वह्निमये चरिर्वदति तान् पुच्छं गृहाणाऽऽशु मे। ते गृह्णन्ति तदा हताः स्यलचरास्तथारितं फेरुणा, पश्चात्तेन कृतं तथापि न हताः पुच्छं तदा त्रोटितम् ॥२५॥

कस्मिंश्चिद् गहनमध्ये वह्निभयात्प्रत्रस्ताः केसरिप्रमुखाः प्राणिनोऽगाधे सरसि निपेतुः। पश्चाद्वाग्नौ शान्ते कण्ठीरवो मृगादीन् व्याजहार—भोः सत्त्वाः! यूयं मम वालधिं गृहीत, सर्वानप्यहं तारयिष्यामि। तदाकर्ण्य सर्वेऽपि तथाऽऽगृह्णन्तमथ मृगेन्द्र माप्तुस्तानखिलान् बहिश्चकार। सा वार्ता केनाऽपि क्रोष्ट्रा हरि निदिता, पुनः कतिपयैरेवाहोभिर्दावसाम्यसमीरणे प्रपतन् जन्तून् सिंह इव जम्बुकोऽवदत्—मे पुच्छमारुह, युष्माभिराप्तमिष्येऽहं। अथ पठमापाय गावुत्सवति, तावदेवास्य पुच्छं मग्नम्, अन्ये पप सर्वे मृताः। यतोऽधमो जनः स्वाधिकवीर्यमनुकुर्वन् क्षिप्रमास्येव ॥ २५ ॥ तथा चोक्तम्—

आत्मवीर्यं न जानाति, दृष्ट्वा दृष्ट्वा करोति यः । स दुःखी स्याद्यया फेरु-स्त्रुट्यत्पुच्छो ह्यधोऽपतत् ॥ १ ॥

अथ महतां छायापि सत्फलदा तत्राऽजापालस्य ३५-सूपनयः—

च्युत्वाऽधो न्यपतन्फलानि स ततो दृष्ट्वा तदाचिंतयद्, गोपो मूर्ध्नि हि खेगमस्य पतिता छाया वरा बुद्धिदा ।
श्लोकस्तेन कृतश्च पादरहितश्छाया गता नो पदं, तादृक् तेन हि पूरितं निजधिया डुक्कं च डुक्कं पदम् ॥ ३६ ॥

एकस्मिन्नन्धुमध्ये जंबुफलानि पतंति स्म, तानि दृष्ट्वा कश्चिच्छागपालो व्यचिन्तयत्—यदिमानि फलानि खाद्यानि । तस्मिन्न-
वसरेऽजापालस्य भालोपरि सरस्वतीविमानस्य छाया पपात । तदानीमजापालस्य बुद्धिरुत्पन्ना, तया श्लोकस्य पादत्रयं तेन रचितं
पर तत्क्षण एवाऽपगता विमानच्छाया । ततः सहजधिया तेन चतुर्थश्चरण इत्थं निर्मितस्तन्निर्मितं पद्यमीदृक्—॥ ३६ ॥

जम्बूफलानि पक्वानि, पतन्ति विमले जले । पतितान्येव दृश्यन्ते, चतुर्थन्तु डुबक् डुबक् ॥ १ ॥
छायापि फलदा पुंसां, महतान्तु विशेषतः । विमानच्छायया वाण्या, गोपोऽपि पटुतां गतः ॥ २ ॥

अथ सद्विद्या सर्वेषां विस्मयकरी भवति तत्र ३६-कथा—

कोप्यागत्य विशारदो वदति मे विद्यां नृपं पश्य भोः !, स्त्रीं मुक्त्वेशगृहे गतो हि गगने मृत्वाऽपतत्तत्समम् ।
सा दग्धा पुनरागतो मम वधूं त्वं देहि वार्ताऽपि सः, कूटं मा वद चानयामि हि वरं लात्वा गतो विस्मितः ॥३७॥

कश्चिद् विप्रः स्वस्त्रियमादाय कस्याऽपि भूभृतो भवनमाससाद । अब्रवीच्च—मम विद्यावैभवं पश्य, नृपोऽपि वरं प्रदर्शयेत्यु-

पिशान् । तदनन्तरमन्तःपुरे निजभार्यां विमुच्य गगने च देवासुरसंग्रामो जायते, तत्राहं प्रयामीत्युक्त्वा गतः । संख्ये हतः कर चरणापनयनैः खण्डितो भुवि न्यपतत् । तं विलोक्य तत्सीमन्तिनी समिद्धेऽग्नौ तेन सहैवात्मानं जुहाव । तत्कालमेव सोऽपि पुरुष ऐन्द्रजालिकश्च नृपसमीपमागत्य जगाद—भोः पृथ्वीश ! प्रयच्छ मे दारान् । नरपतिरपि याथातथ्येन सर्वमुदन्तजातमामूलच्चूलतो न्यवेदयत् । परं सोऽपि तद्वृत्तं मृषा मन्वानो जगाद—मम भार्या त्वद्गृहे एवास्ति । अथैनं नृपोऽप्यभाषत—मद्गृहे तव पत्नी चेत्समानय, इत्युक्तः सोऽपि निजपत्नीमानयत् । तद्विधायाः प्रभावं विलोक्य सदसि निषण्णाः सर्वेऽपि विस्मयमापुः पुनः प्रभूतद्रव्यदानेन तं प्रसादयामासुः ॥ ३७ ॥ कथितमपि—

विप्रेण दर्शिता विद्या, विस्मयः सदसि स्थितः । तमीक्ष्य सुभटाः सर्वे, तदा तस्मै धनं ददुः ॥ १ ॥

अथ कपटेन कुलटा मृतिमाप्नोति तत्र ३८—कथा—

नो पुष्णाति पतिं तमाह कुलटा मेऽन्धं कुरु त्वं सुर!, भुक्त्वेतो हविषा ततो हि हविषा पीनस्तदान्धोऽभवत् ।
पश्चात्सोपमुपागतो वदति स पश्यामि नो निर्भया, भुंक्तेऽन्यैः सह भोगमस्ति बलवान् युग्मं गृहीत्वा हतम् ॥३८॥

क्वापि कुलटा कामिनी स्वपतिं न पुष्णाति, स्वयं च खेलतीति स्वपत्येऽनुरागं नाऽऽश्रितवती परस्मिन्नारज्यत । एकदा सा यक्षमर्चयित्वा पूजावसाने तं प्रार्थितवती—भो यक्ष ! मे भर्ता चक्षुर्विहीनो भवेदिति । एवमतिक्रामति काले तद्भर्ताऽपि तां वार्तां श्रुतवान्, तदा कपटवेषेण यक्षप्रतिमायाः पृष्ठदेशे निलीय स्थितः । अथ तत्स्त्री यक्षप्रतिमासमीपमागत्य प्रार्थयत—भो यक्ष ! मम पतिं नेत्रहीनं कुरु तावत्पृष्ठभागे समुपविष्टः पुरुष आह—हे अबले ! यदि त्वमन्वहं स्वभर्तारं स्निग्धमिमान् घृतपूरानपूपादीन्

प्राणेशोऽपि तन्निशम्य सा तथैवोपाचरत् । तस्याः संपत्स्यते । तन्निशम्य सा तथैवोपाचरत् । तस्याः
वनवान्धोनिर्मितान् पदार्थानाशयिष्यसि, तद्धविलम्बेनैव सोऽन्धः संपत्स्यते । तन्निशम्य सा तथैवोपाचरत् । तस्याः प्राणेशोऽपि
हतलोचन इव प्रणिगदति–अये सुन्दरि ! मे दृष्टौ किमपि नाऽऽपतति, किमहमधुना करवाणि, देहि मेऽवलम्बनमिति ।
तदानीं सा पुंश्चली निर्विशंका विटेन सह रममाणा रतिजनितसुखमन्वभूत् । तस्या हृदि शंकागन्धोऽपि नाऽऽस्पदं चकार । यदा
स सद्यो निर्मिताज्यबहुलभोज्यद्रव्यैः पिनद्धगात्रः समजायत, तदा व्यभिचाररतं युगलं संनह्य यमसदनातिथिमकरोत् ॥ ३८ ॥

उक्तञ्च–कथं हससि भो हंस !, नाहं दर्दुरवाहनः । कालक्षेपं करिष्यामि, घृतान्धो ब्राह्मणो यथा ॥ १ ॥

अथ गुरुः शिष्यान् परीक्ष्य निजास्पदे स्थापयेत्तत्र ३८–कथा—

पारीक्षाय निवेदिताः प्रथमकोऽवग् वृद्धता ते गुरो ! ।
शिष्यान् वक्ति गुरुस्तदाम्रफलमिच्छाम्यानय त्वं पृथक्, पारीक्षाय निवेदिताः प्रथमकोऽवग् वृद्धता ते गुरो ! ।
अन्यो गच्छति शब्दितस्त्वथलघुर्गत्वा विधिं पृच्छति, त्रैविध्यं ज्ञविनीतकं हि गुरुणा ज्ञात्वाऽर्पितं सत्पदम् ॥३९

अथ कोऽपि गुरुः स्वपदे कमपि शिष्यं नियोजयितुं प्रशस्यशिष्यपरीक्षणाय प्रथमं तेषु वयसा ज्येष्ठं प्रत्याह–यत्त्वमस्मभ्यमाम्रफल-
माहृत्य प्रयच्छ तदा सोऽवक्–हे गुरो ! ते मतिः क्व विलीय गता, यद् वार्धक्येऽपि रसालफलमुपभोक्तुं मनः प्रसरति । पश्चाद-
परं शिष्यं प्रत्याह–भोस्त्वमाम्रफलमानय । अथ सोऽप्यानेतुं प्रस्थितः, पश्चात्तमाजुहाव । पुनरित्थमेव तृतीयं कनीयांसं प्रत्यवदत् ।
स त्वमिवाद्य गुरुं पप्रच्छ–कृपालो गुरो ! त्रैविध्यमाम्राणां कतममहमानयानि ? । इत्थं तस्य वाक्पाटवं प्रसमीक्ष्य ज्ञानवन्तं क्रिया-
वन्तं विनयान्वितञ्च तं शिष्यं स्वस्थाने स्वपट्टे वा संन्यवेशयत् ॥ ३९ ॥ तथा चोक्तम्—

परीक्षा सर्वसाधूनां, शिष्याणां च विशेषतः । कर्तव्या सूरिणा नित्यं, त्रयाणां हि कृता यथा ॥ १ ॥

निर्गुणस्त्रीभिर्गृहस्थता भवति तत्र सचिववधूनां ३९–दृष्टान्तः—

लोलाभास्यवधाश्चतुर्मुखसमा श्रुत्वा नृपस्तद्गृहे, गत्वा पश्यति ताः पतिर्वदति भो ! मौनं विधेयं सदा । तन्मोऽन्ये नृपवर्णिताः सुघटिकास्तिस्रो गिरोऽमुः स्वतः, दृष्ट्वा क्रोधाति तुर्यका स हसितः सोऽथ मया किं कृतम् ४०

कस्यापि नृपस्य सचिवस्य चतस्रो योषितः स्खलितवाच आसन्, तद्वृत्तमाकर्ण्य राजाऽपि चिन्तयामास–यदेष उदन्तो वितथोऽवितथो वेति मार्गणीय मयेति संप्रधार्य, एकदावसरमाप्य मन्त्रिणमुपहास्येनोवाच–सचिव ! कदाप्यवसरेऽपि स्वीयेऽवसरे स्वालये न भोजितोऽत्र एकदा त्वद्गृहे भोक्तुमिच्छामीति महादरात्सचिवेन निमन्त्रितो राजा स्वमन्त्रिणो गृहं जगाम। तदानीं सचिवेन स्वीयाश्चत्वारो दाराः संबोधिताः, युष्माभिस्तूष्णींभूयाऽस्माकमिति, तद्वदीरितं ताभिरङ्गीकृतम् । पश्चाद्राजानमाशयितुं घटकाशं पर्यवेषयत् । अथ नृपो यदाऽशुमतिघटकां लिलो हासयितुमवनिपेन प्रोक्तं–घटकाः स्वादुतमाः सुन्दराः । एतदुक्तं निशम्यैका भार्या स्ववाचं नियन्तुं न शशाक । तदाऽस्थिरचित्तमब्रवीत्–" ए घविर्यों वो मैं तविर्यों " एता घटिका मया तलिता । तथोऽपराऽभाषत–" ए घविर्यों तो ते तविर्यां सो मोरे आईयां वेषाई पथ्यां ' एते घटकास्तु त्वया तदा तलिता यदाहमागत्य वैकम्बरम् । तदनु तृतीयाऽवदत्–" माहियो डीमइ हर्यां " मयैषु हिंगु निक्षिप्तम्, एवं श्रुत्वा भूपालो जहास । तदानीं चतुर्थी विस्मयं तुरीया प्रत्यवालुलोके सचिवः । साऽप्युवाच–" मइ माए बायो नाहीं, बायाँ नहीं, बोया सुं काढ़िया वो " हे स्वामिन् ! ममात्र कापि चोक्तिः प्रत्युक्तिन कृता, पुनः कथं भवता नेत्रे विस्फार्येते ? ॥ ४० ॥ भणितमपि—

गुणहीनाः सुरूपाश्च, भवन्ति गृहभञ्जनाः । स्त्रियोऽपि सद्गृहस्यामां, घटिकापाचिका यथा ॥ १ ॥

भद्रजनः सर्वत्र भद्रतामेव लभते, तत्र ४०-कथा-

यज्ञे जग्घिकरीं निरीक्ष्य हरिकेश्यन्नं तदा याचते, तस्मै ते न ददुः सकृद् विषधरं दृष्ट्वा हतस्तैर्नरैः ।
द्रागःस्यान्ते हि तथाऽवदन्त्वविषकैषाऽतोऽपि नो मार्यतां,ज्ञात्वा स्वावगुणं ललौ व्रतवरं प्रोक्ता नु तेनाऽर्यका॥४१॥

कस्मिंश्चिदध्वरे बहवो भूमिदेवा निमन्त्रिता भुञ्जते स्म । तत्र हरिकेशीनामा श्वपचो भक्तं ययाचे । परं ते तस्मै न ददुः, प्रत्युत चुक्रुशुस्तदनन्तर एव विलादेको भुजंगो निरियाय । तं वीक्ष्य विप्रा जघ्नुर्हरिकेशी चाण्डालोऽपि तदपश्यत् । अथो कतिपयैरेव क्षणैस्तत्रैका गोधा निस्ससार तां दृष्ट्वा हरिकेशी हन्तुं प्रधावितः । तदा तत्रोपविष्टा भूसुरा व्याजहुः-अङ्ग ! अवध्यैषा निर्विषत्वात्तदा स स्वयमेव स्वापराधं परिज्ञाय जातिस्मरणोदयाच्चारित्रव्रतं जग्राह ॥ ४१ ॥ अथ च गाथामुच्चार्योपदिदेश ।

सैषा गाथा-भद्देण होइ सव्वं, भद्दं पावेइ सव्वओ भद्दं । हणिओ कण्हो सप्पो, भेरंडो तत्थ मुंच दिट्ठो ॥१॥

सत्प्राणिनो वस्तुवैलक्षण्यं निरीक्ष्य विरज्यन्ते तत्र ४१—उदाहरणम्—

दृष्ट्वेशोऽप्यति सुन्दरं च वृषभं सोऽटाट्यते चैकदा, मार्गे सत्करकण्डुराह निजकान् कस्याऽयमुक्षा तदा ।
प्रोचुस्ते तव भोः! कमिष्टवृषभं श्रुत्वेति दीनोऽपि सन्, वैराग्यं हि विधाय राज्यमखिलं त्यक्त्वा मुनीशोऽभवत्४२

कस्यचित्करकंडुराजस्य कमनीय उक्षाऽऽसीत्। बहुकालानन्तरमेकस्मिन् दिवसे मार्गमध्य उच्चैराक्रन्दन्तं तं दृष्ट्वा स मनुजानपृच्छत्-कस्याऽयं बलीवर्द इति? कश्चिद्प्येनं न बध्नाति ? तत्र स्थितः कश्चिन्मानवो वक्ति-राजन्! भवतां निकाममभिमत एष वृषः ।

गाथा–बहुयाण सद्दयं सोच्चा, एगस्स य असद्दयं । वलयाणं नमी राया, निक्खंतो मिहिलाहिवो ॥ १ ॥

दोहा–चन्दन घसतां चूड़िनो, श्रवण शब्द न सुहाय। एक रखावी चिंतव्युं, बहु मलियां दुख थाय ॥२॥

राजऋद्धि सब परिहरी, लीधो संयम भार । जब इन्द्रे परिखा करी, न चल्यो नमी लगार ॥३॥

अथाऽविमृश्यैव परस्यानुकृतौ लब्धस्याऽपि प्रणाशः, तत्र ४३–कथा–

छिन्दन्निःस्वनरस्तरुं किल वने देवेन तद्वारितो–ऽन्नार्थी मार्गयतीह देवादुडदजान् दत्तं वरं गच्छ भोः ! ।
गेहेऽदन्ति जना विलोक्य धनिना पृष्टं कुतस्तानथो, प्रोचे तत्र गतः सितागृहघृतं तस्यास्तु मुक्तः स तम् ॥४४

कश्चिदधनः कृशश्च पुरुषोऽरण्ये काष्ठमाहर्तुं गतस्तत्र तरुवरं चिच्छेद । तदुपरि काचिदधिष्ठातृदेवताऽन्तर्हिताऽऽसीत्तयोक्तम्–भोः ! मा छिन्धि विटपमेनम् । तदा निःस्वपुरुषोऽवदत्–बुभुक्षितोऽस्मि, प्रयच्छ मेऽभ्यवहर्तुमिति। देव उवाच–भोः ! वरं वृणीष्व, यत्कामयसे तत्ते मनोरथं पूरयिष्ये, ततः स उडदजान् ययाचे । देवेनापि तथाऽस्त्वित्युक्तम्, पश्चात्स गृहमागत्य माषजान् खादितुं प्रारभत । तत्परिवारमपि माषजान् प्रत्यहं भक्षन्तं दृष्ट्वा प्रातिवेशिमको व्यवहारी पप्रच्छ–यत्त्वं माषजान् सर्वदा कुत आनीय खादसि ? स वराकोऽब्रवीत्–वने वृक्षं छिन्दतो ममोपरि देवस्तुतोष, तत्प्रसादेन प्रतिघस्रं माषजानश्नि । तदाकर्ण्य प्रातिवेशिमकः कुठारमादाय वने गत्वा पादपं छेत्तुमुद्यतः । तदानीं देवो हस्तं तथा जग्राह येन कथमपि मोचयितुं न शशाक । पश्चाद् गृहे संभृतं घृतं प्रतिवेशिमने देयमिति प्रतिश्राव्य गृहाय मुमोच, । गृहे समुत्पन्ने घृते शर्करां निपात्य भुंक्ष्वेति स्त्रिया प्रतिबोधितोऽपि देववाण्या [illegible] वराको गृहस्थितमपि शर्कराघृतं भक्षितुमसमर्थः ग्रन्थिस्थितमपि जहाविति जानीहि ॥४४॥ यतः–

दोहा—डोकरु स्यातां देखिने, हौंस हुई मनमांय । लेइ कुल्हाड़ो धनगयो, शूर थंभी तस काय ॥ १ ॥
वनिता पतिसुं वीनवे, धणी तें कवण कीय । डोकरु तो पाम्या नहीं, घरना भूका वीय ॥२॥

सत्पुरुषो हीनगुणं वस्तु पुरो न न्यसेत्तत्र ४४—कथा—

दृष्ट्वाऽनीकममात्यमाह नृपतिः कस्यास्ति शौर्यं बले? ह्यस्यैतस्य तदा मृगाधिपपदे श्वाऽऽरोपितः स्वामिना । युद्धा कृत्रिमका सटा बलमुखे संस्थापितः श्वा शुनः—स्तत्रागाद् भयतीति पृष्ठचरणाभ्यां सोऽपि नष्टोऽधमः ॥४५॥

कस्याऽपि प्रभुतो विषये वैरिपुर्वेलमस्ताय वैरी तुम्ब्धुमागात् । तदाऽऽगमनं श्रुत्वा नृपो मंत्रिणमपृच्छत्—हे मंत्रिन् ! सैन्ये कस्याधिकं बलं भवति ? तदा सचिवेनोक्तम्—सेनायां करिबलं मुख्यम् । नृपः प्रोवाच—सिंहमेकं कृत्रिमं कृत्वा सैन्यसमक्षं स्थापय । इत्येतच्छ्रुत्वा मंत्रिणा कश्चिदेकः सारमेयः कृत्रिमकेसरादिना सिंहीकृत्य भयंकराकृतिः सेनायाः पुरः समानीतः । स शत्रुनृपस्य बलमुखे नूतनमत्तघटस्थीलां गजघटां प्रेक्ष्य भयत् पराङ्मुखः सन् पलायांचक्रे । यथा २ सैन्यमभ्यागच्छति, तथा २ कुक्कुरः पृष्ठे पदानि निदधौ । तस्मात्सत्पुरुषो भद्रपुरुषः कस्याप्यनुकरणं न कुर्यात् ॥ ४५ ॥ तथा चोक्तमपि—

आबद्धकृत्रिमसटा विकटास्यभक्ति-रारोप्यते मृगपतेः पदवीं यदि श्वा ।
मत्तेभकुम्भतटपाटनलम्पटस्य, नादं करिष्यति कथं हरिणाधिपस्य ॥ १ ॥

अथ च्छिन्नार्द्धपुच्छखरीप्रहेलिकायाः ४५–कथा—

भूपः प्राह ददामि यो मम सुताप्रश्नोत्तरं दास्यति, राज्यार्धं तनयां च तस्य यदि नो शूलिं च दत्तावुभौ ।
दृष्ट्वैकेन कृता प्रहेलिकवरा मेऽर्थं कुरु त्वं प्रिये !, प्रोक्त्वा खंडखरीं विवाह्य नृपजां राज्यं च लात्वा गतः ॥४६॥

कश्चिद्राजा मनुष्यान्प्रत्युवाच–यो मम सुतायाः प्रश्नोत्तरं प्रदास्यति तस्मै राज्यार्धं स्वां दुहितरं च दास्ये । अथ च वादं कुर्वन् कश्चिदुत्तरं न प्रयच्छेत्तर्हि शूलमारोपयामीति प्रतिश्रुतम्। अनेन पणबन्धेन स पुरुषयुगलं शूलमारोपयामास। अत्रान्तरे कोऽपि राजन्यः स्वस्त्रिया द्विरागमनं कृत्वाऽऽगमत्, मध्येमार्गं च शूलमारोप्यमाणौ द्वौ पुरुषौ विलोक्य प्रहेलिकामेकां च समीक्ष्य स्वयं कुमार्याः पुरो गतो विचिन्त्य च राजपुत्रीं वक्तुं प्रचक्रमे—हे राजसुते ! तव प्रहेलिकायास्त्वर्थो खंडखरीति वर्तते । परमस्मदीयां प्रहेलिकामपि विशदीकुरुष्वेति वाक्यविन्यासेन भूपालः समबुद्धः, यदनेनास्मत्प्रहेलिका प्रतिपादितेति मत्वा स्वतनयां राज्यार्द्धञ्चाऽदित। सोऽप्युभे भार्ये राज्यं च लात्वा प्रस्थितः ॥ ४६ ॥ अथेदानीं नृपदुहितृपृष्टां प्रहेलिकां प्रकटयति—

हुतो तिवारे खाजे नहीं, न हुतो तिवारे खाजे । ए हरियालीनो अर्थ कहे, तेहने कुमरी छाजे ॥ १ ॥

करी करम तो एक तेम बीजी, करी करम तो छे तेम त्रीजी ।
राणी कंकण शीतल थासे, कइक रंक पर कागड़ा वासे ॥ २ ॥

ऑख माहिं पांख विआई, शूली दीधुं पाणी । एहनो अर्थ बांडी गधेड़ी, तेहने कहे ते राणी ॥ ३ ॥

अथ पुरुषा शशकेन सिंहः कूपे निपातितस्तत्र ४१—कथा—

जीवान् हंति हरिस्तदा वनचराः मोक्तुः किमर्थं हरे !, प्रत्येकोऽप्यपरे क्रमे हि शशको घर्मे विलम्ब्यागतः ।
पृष्टोऽभग् लघु नो ! वने तव रिपुर्भो ! दर्शयाऽऽदर्शि तं, कूपे स्व प्रतिबिम्बमीक्ष्य पतितस्तेनाशु पुरुषा हतः ४७

कस्मिंश्चित् वने सिंहो बहून् प्राणिनो हन्ति, तद् दृष्ट्वा सर्वेऽपि वनचराः मेलीभूय कंठीरवं प्रत्यूचुः—भो मृगाधिप ! यस्मदात्र प्राणिहिंसां नानुतिष्ठेः, वयं प्रतिदिनं जीवमेकमदास्याम अथ सिंहोऽपि तद्वचनमंगीचकार । ततस्ते निरुपद्रवं क्रमेण समभ्यागच्छन् । एकदा शशस्यापि वनस्य पर्याय आसीत्, स चिरादागतस्तदा कोपाकुलितोऽपि सन् शशकमवादीत्—रे अधम ! कस्मात् चिरविलम्बेनाऽऽयातोऽसि ! अथ शशकोऽवदत्—हे मृगेन्द्र ! मार्गे तव रिपुरपरः पंचास्यः समागतः, स मम मार्गमरुध । हरिरब्रवीत्—भोः शशक ! मम शत्रुं दर्शय, तदा केसरिणं वने नीत्वाऽम्बुमध्ये प्रतिबिम्बमदर्शयत् । सिंहोऽपि स्वप्रतिबिम्बं विलोक्य, एष एव मे रिपुरिति मत्वा कूपे पतित्वा ममार । इत्थं बुद्धिपूर्वककार्यकरणेन लघुकायः शशकोऽपि कंठीरवमजीघनत् ॥ ४७ ॥ तदुक्तमपि—

बुद्धिर्यस्य बलं तस्य, निर्बुद्धेस्तु कुतो बलम् ? । वने सिंहो मदोन्मत्तः, शशकेन निपातितः ॥ १ ॥

अथ कविकौशल्योपरि ४७—कथा—

भूपृष्ठे याति कविः करेण नृपतिः कूर्चं यदाऽऽकर्षति, केशा तेन करे विलोक्य कथितो निर्भाग्य ! लाघवकम् ।
सोऽप्यधिकं हि करे ददाति तव मे भाग्यं तदा ज्ञायते, तुष्टः सन् प्रथिणी ददौ स कवये कार्यदाकार्ण्यं गतः ॥४८॥

एकस्मिन् दिने प्रभाते कश्चिद् बुधो राजपरिषदि स्वं याचितुमभ्यैत् । परमस्य नृपतेः प्रतिज्ञाऽऽसीत्- यदि कोऽप्यर्थी धनं याचितुमुपागच्छेत्तर्हि स्वकूर्चिकोपरि दक्षिणहस्तपरामर्शेन यावन्तः कचाः प्राप्ताः स्युः, तावत एव दीनारान् प्रयच्छेयम्, इत्यस्य कोविदस्य सभामुपगते भूपतिर्हस्ते स्वकूर्चिकाया एक एव केशः संप्राप्तस्तदा राज्ञा कविं प्रत्युक्तम्-भो हतभाग्यशेखर ! गृहाण दीनारमेकमिति । प्राज्ञोऽवक्-कथम् ? महीपतिः प्राह-यतो मम करे कूर्चिकाया एक एव कचः समागतस्तस्मादेकामेव स्वर्णमुद्रा-मादत्स्व, यदि चास्मादधिकाः स्युस्तर्हि तुभ्यमधिका दद्याम् । तच्छ्रुत्वा कविरचकथत्—

त्वदीया दंष्ट्रिका राजन् !, मदीये चेत्करे भवेत् । तदा भाग्यमभाग्यं वा, ज्ञायेत स्फुटमेव च ॥ १ ॥

अर्थात् तव कूर्चिका मम हस्तगता भवेत्तदाऽहं निजभाग्यं विद्यामित्येवं समयप्राप्तं वचनं निशम्य बुधोऽयमिति परिज्ञाय प्रीतः सन् प्रजानाथो विप्रमाहूय दानार्थं संकल्पितुं जलं जग्राह । तत्पयः प्रपश्यन्नेव स भूपतिगुणवर्णनात्मकं काव्यशतं चकार । तदनन्तरं प्रभूतं द्रविणञ्च नीत्वा गतः ॥ ४८ ॥ तत्काव्यानां द्वौ श्लोकौ निदर्शनरूपेण प्रदर्श्येते—

निवसतु तव गेहे निश्चला सिन्धुपुत्री, प्रविशतु भुजदंडे चण्डिका वैरिहन्त्री ।
तव वदनसरोजे भारती भातु नित्यं, न चलतु तव चित्तात्पादपद्मं मुरारेः ॥ १ ॥

यो गंगामतरत्तथैव यमुनां यो नर्मदां शर्मदां, का वार्ता सरिदम्बुलंघनविधेर्यश्चार्णवांस्तीर्णवान् ।
सोऽस्माकं सहजाऽऽश्रितोऽपि सहसा दारिद्र्यनामा सखा, त्वद्दानाम्बुसरित्प्रवाहलहरीमग्नश्च संभाव्यते ॥२॥

अथाऽसन्तोषिणः पुरुषस्य ४८—दृष्टान्तः—

भृंगे क्वापि जटी स्थितः प्रतिगृहस्याऽऽस्यऽऽशु भिक्षां दिने, पृच्छन्त्यत्र समे जना मम गृहादायाति नो वा तदा ? ।
सोऽवग्दुष्टजना वसन्ति सकलाः किं मे गृहादागतं, स्वीकारे च महोदरंभरिरयं ज्ञात्वेति निष्कासितः ॥ ४९ ॥

कस्मिंश्चित्पत्तने कोऽपि साधुर्भृंगे निवसति स्म। एकदा सर्वैरपि स पृष्टः—साधो! कस्यापि गृहात् भिक्षा समागच्छति न वा? सर्वे लोकाः लोकज्ञापनिकाः सन्ति किम्? तदा तेनोक्तम्—भवन्तो दुष्टमानसा जाताः को भिक्षां दद्यात्? तदा सर्वेऽप्येकैकशः प्रष्टुं प्रारभन्त—भगवन्! मम गेहादायाति न वा? तदा साधुः सर्वानपि ओमित्युवाच। एवं भिक्षाप्राप्तिं स्वीकुर्वन्तं तमायू नमिति ज्ञात्वा, सर्वोऽप्यवमं मधुरक इति निर्णीय तैः स ग्रामान्निष्कासितः ॥ ४९ ॥ कथितमपि—

दुःखिताः सन्ति संसारे, जीवाः संतोषवर्जिताः । संतोषरहितो मर्त्यो, भृंगान्निष्कासितो जटी ॥ ॥ १ ॥

अथ भाववन्दनोत्कृष्टत्वमधिकृत्य शाम्बकुमारस्य ४९—कथानकम्—

कृष्णो वक्ति सुतौ ! ददामि प्रथमातो यो जिनं वन्दते, तच्छ्रुत्वा सुतपालको जिनतटे गत्वाऽनमे शाम्बकः ।
अथाऽऽज्ञापयमिमं प्रदेहि मम भोः! पृष्टे जिने नेमिना, रथ्याभावफलं महद्धि हरिणा शाम्बस्य दत्तो हयः ॥५०॥

एकस्मिन्दिने श्रीकृष्णः शाम्बपालकौ सुतौ वक्ति—भोः! यो हि युवयोर्मध्ये श्रीनेमिनाथं प्रथमं गत्वाभिवन्देत तस्मै प्रधानाश्वं दद्यां, तच्छ्रुत्वा पालकनामा सुतो रात्रावेव श्रीनेमिनाथं भगवन्तं ववन्दे। शाम्बकुमारस्तु सवन्दिम विधिना भावबन्दनं चकार।

पश्चात्पालकेनागत्य श्रीकृष्णं प्रत्युक्तं मह्यमर्वन्तं प्रयच्छ, तदा श्रीकृष्णचन्द्रेणोक्तमहं श्रीनेमिनाथं पृष्ट्वाऽऽप्स्ये। ततो गत्वा भगवन्तमपृच्छद्-भगवन्! पूर्वं भवन्तः केन वन्दितास्तदा भगवतोक्तम्,-द्रव्यवन्दनां पृच्छस्युत भाववन्दनामिति तदानीं श्रीकृष्णः प्राह-यस्या आचरणेन परमश्रेयः प्राप्नुयात् तामेव पृच्छामि। अथ श्रीनेमिनाथेनाभिहितम्-यद् भाववन्दनं गरीयस्तस्मात्पूर्वं शाम्बकुमारेण वन्दितोऽस्मि। इति तद्वचो निशम्य श्रीकृष्णः शाम्बकुमाराय पट्टाश्वं प्रायच्छत् ॥ ५० ॥

पठ्यतेऽपि-भाव एव मनुष्याणां, कारणं सुखदुःखयोः। पृष्ट्वा नेमिश्च कृष्णेन, कृतं यद्वत्स्वपुत्रयोः ॥१॥

अथ भिन्नरुचिर्लोकस्तत्र ५०-कथा—

अश्वस्थं जनकं सुतं विचरतं प्रोचुर्विशोऽधो व्रजा-श्वारूढं कुरु पुत्रकं कृतमतो दृष्ट्वा च पुत्रं तथा।
आरूढौ पथि गच्छतो जडधियौ तार्क्ष्यं हि किं मार्यतां, पद्भ्यां दुग्धमयं ददाति तुरगो युष्मभ्यमानीतवान्॥५१॥

कौचित् पितापुत्रौ हयमादाय कंचिद् ग्रामं प्रस्थितौ, मध्येवर्त्म जनकस्तुरङ्गमारूढः सुतश्च पदातिरग्रे व्रजति। तदनन्तरं सर्वेऽपि मेलकाः पान्था ब्रुवते-यदसौ स्वयं घोटकमारुह्य प्रयाति सूनुं पदातिं गमयति, कीदृशो निर्घृणः? तदनन्तरं तत्पित्राऽभिहितं-भोः पुत्र! त्वमश्वमधितिष्ठ। पश्चादात्मजमर्वन्तमारूढं समीक्ष्य पथिका अब्रुवन्-हृष्टपुष्टाङ्गः सुतः सैन्धवमधिरुह्य प्रयाति स्थविरो जनकश्चरणौ निघृष्य निघृष्य भुवि गच्छति। तद्वचस्तदाकर्ण्य उभावपि वाहमध्यारुरुहतुस्तदनु पितापुत्रौ तुरङ्गममारूढौ वीक्ष्य प्रेक्षकाः प्राजल्पन्-हन्त! वराको वाजी हन्यते। तच्छ्रुत्वा द्वावपि पद्भ्यां यातः स्म। अथो दर्शकैर्गदितमहो! युवां मन्दधिषणशेखरौ स्थः,

गुणिनि पुरुषे दोषोऽपि निलीयते तत्र ५२-दृष्टान्तः—

गुणिनि पुरुषे दोषोऽपि निलीयते तत्र ५२-दृष्टान्तः—
जातो माघगृहे सुतो हि हरभे पित्रा सुतः पाठितो, भोजश्रीसदने गतो निशि हरो गृह्णन् धनं जागृतः ।
शय्याऽधो नृपते स्थितश्च स तथा काव्यं नृपोऽवक् तदा, ज्ञात्वा गर्वयुतं हि तेन पदतुर्येणेश्वरो बोधितः॥५३॥

माघपण्डितस्य सद्मनि चौरनक्षत्रे पुत्रोऽजायत । तत्पिता चौर्यं महत्पापमिति हेतुमच्छास्त्रवचनं तं पपाठ । परं तत्पुत्रश्चौर-
भोत्पन्नत्वाच्चौर्याय भोजभूपगृहस्य धनागारे प्रविवेश, द्रविणं चादातुमुद्यतः, परं तदानीमेव कश्चिद् भाण्डागाररक्षको जजा-
गार । पण्डितसुतस्तं वीक्ष्य तत्रैव राज्ञः शय्याधः सुष्वाप । प्रभाते प्रबोधयितुं नृपं चारणा विरुदावलीं जगुः । तदानीं भोजः
कवितामेकां कर्तुमारभत, तन्निर्मितानि त्रीणि पदानि श्रुत्वा राजानं गर्वयुतञ्च दृष्ट्वा स चतुर्थं चरणमुवाच । तच्चरणं श्रुतिगोचरी-
कृत्य राजा प्रतिबोधं प्राप, तस्मै च संतुष्य प्रभूतं धनं ददौ ॥ ५३ ॥ तत्पद्यश्चेत्थम्—

चेतोहरा युवतयः स्वजनोऽनुकूलः, सद्बान्धवाः प्रणयगर्भगिरश्च भृत्याः ।
वल्गन्ति दन्तिनिवहास्तरलास्तुरङ्गाः, सम्मीलने नयनयोर्नहि किंचिदस्ति ॥ १ ॥

अथ स्त्रीवशः पुरुषः किं किं न करोति तत्र ५३-दृष्टान्तः—
प्राज्ञेशप्रमदे मिथो विवदतां वश्योऽस्ति मे वल्लभो-ऽन्योन्यं दर्शयति च्छलेन च पतिः प्रोक्तो स्त्रिये चेत्कथम् ? ।
जीवेऽश्वोपरि रोहणं यदि तयेशेनापि च स्वीकृतम्, तदृष्ट्वाऽपरया पतेः समकचा मुण्डापितास्ते तदा॥५४॥

भोजनृपस्य कालिदासपंडितस्य चोभे भार्ये मिथो धर्मभगिन्यौ बभूवतुः । एकस्मिन्दिवसे द्वे परस्परं गदितुमारेभाते—यद-

स्वकीयो भर्ता मम वशे वर्तते। तदा पण्डितपत्न्या पृष्टा राज्ञी, कया रीत्या स्वकीयो भर्ता स्वदधीनस्तन्मम पुरो निवेदय। तदनन्तरं भविष्याऽभिरिति यथा विश्वसे तथैव दर्शये, तदा कोविदसीमन्तिनी जगाद–यदि त्वं स्वपतिमश्वं परिकल्प्याऽऽरोहस्तर्हि ते पतिं वशे विद्याम्। तत्काल एव सा व्यानीकृत्य त्रुटिते पर्यंके समासीनोपेयमक्रन्द्–हा! हृदयं विदीर्यते प्रियेऽहम्। अस्मिन्नन्तरे क्षितिपतिरभ्यर्णमागत्य पप्रच्छ–कस्मादेवं गर्हितं भवाना क्रन्दसे? अथ राज्ञी जगाद–उदन्तो वक्तुमनर्हः। तदनन्तरं राज्ञाऽत्याग्रहेण तद्वृत्तान्तं प्रष्टुं अयः। तदा राजपुत्राय–स्वमश्व इव भूत्वा मामारोहय तत्काले कशाभिः ससकृत्स्त्वामभिहन्यां ततः त्वस्या मर्वेवम्, ततस्तत्सर्वमपि नृपमकरोत्। तत्सर्वं कालिदासपत्न्या दृष्टं प्रच्छन्नया। पुना राज्ञा बुधभार्या प्रत्युक्तं–यदि त्वं स्वभर्तुः श्मश्रूणि मुण्डितमुण्डं च कारयित्वा संसदि प्रवेशयिष्यसि तदा त्वां भर्तृमोहिनीं विद्याम्, तदनु तस्या आग्रहेण कालिदासोऽपि यथानिर्देशं कृतवान्। पर्षदि तथापान्तं कविमालोक्य नृपतिः पप्रच्छ–कस्मिंस्तीर्थे मुण्डितोऽसि? ॥ ५४ ॥ तदा कालिदासः पद्यगिरा प्रत्यवादीत्—

कालिदास ? कविश्रेष्ठ !, कुत्र पर्वणि मुण्डनम् ? । अनश्वा यत्र नेष्यन्ति, तत्र पर्वणि मुण्डनम्॥ १ ॥
किं किं नाचरते प्राज्ञ', स्त्रीयाच्या प्रेरितो नरः । अश्वरूपी भवेद्राजा, मंत्री मस्तकमुण्डितः ॥ २ ॥

अथ पट्टवचनस्य विश्वासो गतः स जीवन्नपि मृतो ज्ञेयस्तत्र ५४—दृष्टान्तः—

दृष्ट्वा काकमर्सि हि मार्गेति नृपो बाणं गृहीत्वा धावत्, पुस्त्विा सुमलेन मुञ्चति यदा काकस्य लग्नं दृढम् ।
प्राप्तोऽयो बलिभुक् तदाऽत्र नृपतिं माहं मृतस्त्वं मृतो, यास्यं ते नरमूपणं गतमतो धिक् स्वार्थकां जीवितम्॥५५॥

कश्चिद्राजा तरोरध आस्त, अत्रान्तरे कोऽपि काको द्रुमोपरि स्थितः सन् कर्कशशब्देन रटितुमारेभे । तं वीक्ष्य भृत्यमसिमानेतुमादिशद्राजा, स्वयं प्रच्छन्नतया च तूणीराच्छरमेकमुद्धृत्य कार्मुके सयुयोज । तां वार्तां श्रुत्वा वायसो व्यचिन्तयद्—यावदसौ खड्गं गृहीत्वा वृक्षमारुह्य हन्तुमुद्यतोऽभविष्यत्तावदेवोड्डयिष्ये, इत्थं विश्वसन् स्थितः स नृपेण बाणेन हतो विह्वलश्च सन्नधो भुवि न्यपतत् । अथ सन्निहिते मृत्यौ राजानमूचे, यदहं न म्रिये, त्वमेव म्रियसे, यतो मनुष्यस्य वाक्यमेव भूषणं भवति तस्मात्त्वं च्युतोऽसि, सत्यवचनरूपभूषणाभावे मुखान्निःसृतं वचनं चार्मणं वाद्यमिव विज्ञेयम् । यस्य वचसि जनस्य विश्वासो नास्ति तस्य त्वादृशस्य जीवितं धिग्, किन्तु मरणमेव गरीयः । ॥ ५५ ॥ उक्तञ्च—

असारः सर्वसंसारो, वाचि सारस्तु देहिनाम् । वाचा संस्खलिता यस्य, सुकृतं तेन हारितम् ॥ १ ॥
मग्गियं खग्गफलय, को उद्देसेण संधिओ बाणो ?। सयं मूओ ण काओ, मुआ ते वयणचुक्काओ ॥ २ ॥

अथ वने तृषार्तानां यक्षशापमृतप्रायाणां चतुःपाण्डवानां यक्षप्रश्नोत्तरेण जीवापने युधिष्ठिरस्यापि ५५—कथा-
सत्रे पांडुसुताः सरोऽपि तृषिता दृष्ट्वाऽब्धिसंख्या गता—स्तत्राऽऽहाऽपेय मे ततो पिब मरिष्यस्युत्तरं नो जलम् ।
नोक्त्वार्थं च तदा सुपीतसलिला निश्चेष्टितास्तेऽभवन्, दत्त्वार्थं हि युधिष्ठिरः प्रातिसुरं जीवापयत्याशु तान् ॥५६॥

जातु विपिनमध्ये पाण्डवास्तृषार्ता अभवन्, तत्र नीरं पश्यन्तो चिरकालेन जलसंभृतं तडागमपश्यन् । तदा पञ्चानां मध्यादेकः पयः पातुं वारि समानेतुञ्चाऽगमत् । तत्र गत्वा यावत्पयः पातुं प्रारेभे तावत्सरःस्वामी कश्चिद्देवस्तं प्रत्याह—यदि मम

प्रश्नस्योत्तरं दास्यसि, तर्हि नीरं पातुं शक्ष्यसीति वदन्तमश्रुतमिव कृत्वा जलं पपौ मृतश्च । बहुकाले परावर्तनमपश्यन्नपरो गतः, एवं चत्वारोऽपि भ्रातर एकैकशः कृत्वा तत्र जग्मुः । प्रश्नोत्तरस्याऽप्रदानेन तद्वचसा निहता भुवि पेतुः । यथाऽऽगतश्चतुर्षु स्थितो व्यचिन्तयत्–यो हि तत्र गच्छति, स न परावर्तते, क्व भ्रातरः ? तस्माद् युधिष्ठिरः स्वयं तत्राऽगमत्, चतुरो भ्रातॄंश्च निश्चेष्टान् नान्वपश्यत् । तृषितश्च जलं पातुं प्रवृत्तस्तदा देवताऽब्रवीत्–मम प्रश्नस्योत्तरमदास्यंश्चेत् तर्हिमे चत्वारोऽपि तवानुजा अजीविष्यन् सलिलञ्चाऽपास्यन्, उत्तरमदत्त्वा पयः पास्यसि चेत्तर्हि त इव त्वमपि मरिष्यसि । तच्छ्रुत्वा धर्मराजोऽवादीत्–कथय किं प्रष्टुं कामयसे ? ततो यक्षराजः प्रश्नानपृच्छत् धर्मपुत्रो युधिष्ठिरः प्रश्नानामुत्तरं ददौ ॥ ५६ ॥ ते च श्लोका अधस्तना –

का वार्ता १ च किमाश्चर्यं २, कः पन्थाः ३ कश्च मोदते ? ४ । इति मे चतुरः प्रश्नान्, पूरयित्वा जलं पिब ॥ १ ॥

अस्मिन्महामोहमये कटाहे, सूर्याग्निना रात्रिदिवेन्धनेन । मासर्तुदर्वीपरिघट्टनेन, भूतानि कालः पचतीति वार्ता २

अहन्यहनि भूतानि, गच्छन्ति यममन्दिरे । शेषा जीवितुमिच्छन्ति, किमाश्चर्यमतः परम् ? ॥ ३ ॥

तर्कोऽप्रतिष्ठः श्रुतयो विभिन्ना, नैको मुनिर्यस्य वचः प्रमाणम् ।
धर्मस्य तत्त्वं निहितं गुहायां, महाजनो येन गतः स पन्थाः ॥ ४ ॥

पञ्चमेऽहनि षष्ठे वा, शाकं पचति यो गृही । अनृणी चाप्रवासी च, स वारिचर ! मोदते ॥ ५ ॥

इत्थं युधिष्ठिरस्य प्रश्नोत्तराणि निशम्य प्रीतः सन् देवो वरं ददौ, यत्ते मृता जीवन्तु चत्वारो भ्रातरः ।

अथेदानीं स्त्रीदुराचारचरित्रोपरि ५६—कथा—

अथेदानीं स्त्रीदुराचारचरित्रोपरि ५६—कथा—
विप्रस्त्री च बहिर्बिभेमि दिवसे काकात्तदा प्रेषति, सार्द्धं छात्रकमेकदा निशि गृहात्सा निर्गता पृष्ठगः ।
मार्गे पश्यति नर्मदोत्तरगतां दत्त्वा हरस्याज्ञकां, सुप्ताऽऽगत्य गृहे तथा ह्यवगतं सोऽवक् चरित्रं तदा ॥५७॥
पुरा कस्यापि श्रोत्रियस्य गंगापाठकस्य भूसुरस्योपकण्ठे बहवश्छात्राः पठन्त आसन् । परं विप्रस्त्री दिवसे यदा बहिर्याति, तदा
स्वभर्त्तारं प्रत्यहं वक्ति—बहिर्निःसृताऽहं वायसाद्बिभेमि, तस्माद्यदाऽहं बहिर्यामि, तदा मया सार्द्धं स्वकीयः कश्चिच्छात्रः प्रेषणीयः,
औचित्याद् विप्रोऽपि तथा चक्रे । अत्रान्तरे विप्रान्तिके कश्चिदेकः प्रवीणश्छात्र आसीत्, स व्यचिन्तयदेषा गुरुपत्नी स्त्रीचरित्रमातनोति,
अहनि यदा बलिभुजो बिभेति, तदा यामिन्यां किं करोति ? एवं विचिन्त्य केनाऽपि व्याजेन स प्रच्छन्नः स्थितः । तदाऽर्धयामिन्यां
सा स्त्री गेहान्निर्गता नर्मदायाः पारे गत्वा तत्र स्वकेन जारेण सहाऽरंस्त, पश्चान्नदीमुत्तीर्याऽवारमुपागमत् । तत्पृष्ठे कामुकोऽपि
नीरमभिताडयन्नैत्, तावदेव जलान्तः कश्चिन्नक्रो भुजङ्गस्यांध्रिमग्रहीत् । तदानीं तया स्त्रियाऽभिहितम्—ग्राहस्य नयनोपरि पादा-
घातं कुरुष्व, तथाकृते चरणेन झटित्येव मकरमुखान्मुक्तः । एवं द्वावपि निकेतनमागत्य सुषुपतुः, एतदखिलमपि चरित्रं तेन
च्छात्रेण निलीय विलोकितम्, अथ च स्त्रीचरित्रं सम्यग् बुबोध । पश्चादप्यागामिनि दिवसे तया पूर्ववदेव निगदितम्, तत्समये तेन
च्छात्रेण निशि यथा दृष्टः सर्वोऽप्युदन्तोऽशेषतो निवेदितः स्वोपाध्यायसमक्षम् । तद्भार्याऽपि तमेव माणवकं छात्रेषु मुख्यं विवेद,
द्विजोऽपि तां स्वैरिणीं विज्ञाय तत्याज ॥ ५७ ॥ तथा चोक्तम्—
दिवा बिभेति काकेभ्यो, रात्रौ तरति नर्मदाम् । कुतीर्थेष्वपि जानाति, जलजस्याक्षिरोधनम् ॥ १ ॥

अथ संसर्गेण दोषगुणा भवन्ति तत्र द्वयोः शुकयोः ५७—कथानकम्—

दृष्ट्वैकं नृपतिं वने निगदिताः कीरेण भिल्लास्त्वरा, आकर्ण्याऽऽशु गतोऽग्रके हि मुनयोऽन्येनाऽपि भात्यर्थकाः। तेऽभ्यागत्य वदन्ति तिष्ठ नृपते! वाक्यान्तराद्विस्मितः, सोऽप्यूचे संगगुणा हि तस्य पितरावेकौ मम स्तस्तथा ५८

वसिमिमर एकदा क्षितिपालो वक्रशिक्षितवाजिनमारुह्य वनं गतः। तत्रान्तरे ग्रामभिल्लसंघे कोऽपि तस्करकर्मप्रवर्तकः कीर आसीत्, स नृपं प्रेक्ष्य वक्तुमारेभे—भोः! धावत धावत, नृपं लुण्टतैनमिति वाचं कर्णपुटीकृत्य राजा घोटकं प्रधाव्य ततः पलायांचक्रे। किंचिद्दूरस्थानं गत्वा कस्यापि तापसाश्रमं प्राविशत्, तत्रापि पञ्जरगतः शुको राजानमायान्तं विलोक्य तापसानुवाच—भो आतिथेयाः! एष नरपतिर्युष्मदावासं प्राप्तः, ततोऽस्य भ्रान्तस्य सत्कारेणोपकुरुध्वं, तदाकर्ण्य नृपतिस्तुष्टोऽभवत्। तदानीं सर्वे मुनयः शीतोदकुम्भस्त्रस्ता विष्टरपाद्यचन्दनमाल्यैर्नृपतिं समपूजयन्। राजाऽपि विविधसुखसत्कारं शिरसा परिगृह्य बभाषे—किरातसंघे कोऽपि शुको मां निभाल्योच्चैः चुक्रोश, लुण्टत लुण्टतैनमिति, एष च कीदृशो मधुरवाक् शुक इति प्रशंस। तदुक्तं निशम्य कीरोऽवग्—राजन्! संसर्गस्य एष गुणः, आवयोः पितरावेकौ परं स तस्कराणां मध्ये तिष्ठति, अहञ्च मुनिषु निवसामि, तस्मादिदं संगविलसितम्॥ ५८॥ तदोक्तं तेन शुकेन—

माताऽप्येका पिताऽप्येको, मम तस्य च पक्षिणः। अहं मुनिभिरानीतः, स च नीतो गवाशनैः॥ १॥

गवाशनानां स गिरः शृणोति, अहञ्च राजन्! मुनिपुङ्गवानाम्।

प्रत्यक्षमेतद् भवताऽपि दृष्टं, संसर्गजा दोषगुणा भवन्ति॥ २॥

अथाऽल्पपठनेऽपि सफलपरिश्रमवतो यवमुनेः ५८–कथा—

भूपो यत्र हि गर्दभो यवमुनिं दृष्ट्वाऽऽह तं धीसखः, शत्रुस्तेऽस्ति तदा वधाय निशिगः श्रुत्वाऽऽर्यकां तन्मुखात्।
क्रुद्धोऽन्तःकरणे विचारयति राड् मे दीर्घपृष्ठोऽनृतो, ज्ञानी साधुरयं हि नो मम रिपुर्ज्ञात्वा गतः स्वालये॥५९॥

कस्मिंश्चिन्नगरे गर्दभसेनो नाम राजा राज्यमचीकरत्। तत्पिता यवनृपो वार्धक्ये वैराग्येण दीक्षां जग्राह, स च यवमुनिरपठितोऽपि सद्वृत्तो विनयी निष्प्रमादी चाऽऽसीत्। अथैकदा केवलं मार्गे चलन् पामरजनेभ्यस्तिस्रो गाथाः श्रुतास्ताः कण्ठीकृताश्च। ततः स साधुः स्वपुत्रादिनाऽऽत्मानं वन्दापयितुं तस्मिन्पत्तने कुम्भकारगृहमध्यतिष्ठत्। तत्काले राज्ञो दीर्घपृष्ठनाम्ना मुख्येन सचिवेन नृपस्य रूपवती 'अडोलिकाख्या' भगिनी निजसद्मनि संगोप्य स्थापिता। यदा साधुरागतस्तदा मन्त्री मनसि भीतो व्यचिन्तयत्—असौ साधुरन्तर्यामित्वादमूं वार्तां राज्ञे निवेदयिष्यति, तस्मादीदृशः कश्चिदुपायो विधेयो येन भूपो विमनस्को भूत्वा साधुं हन्यान्निस्कासयेद्वेति विचिन्त्य भूपालं प्रत्यवोचत्—तव पितुश्चेतः स्वधर्माच्चलितं, अतो दत्तमपीदं राज्यं पुनर्जिघृक्षति, इति श्रुत्वा गर्दभनृपश्चुकोप। अथ स निशि परमर्षिं हन्तुं कुलालनिकेतनमायात्, तदागमनवेलायां यवमुनिर्विजने पूर्वश्रुतं गाथात्रयमभ्यसन्नास्ते। ता गाथाः समाकर्ण्य परमार्थञ्च विदित्वा राजा प्रतिबोधं प्राप, विवेद चाऽस्माकं जनकस्तु तत्त्वविद्, मम स्वान्तस्योदन्तं याथार्थ्येनाऽचकथत्, तस्मादेष प्रधानः किंसखा। अस्या गाथायाः प्रमाणेन मदीया भगिनी स्वहर्म्ये भूमिगर्भे प्रच्छन्नीकृता तेन दुष्टेनेति ज्ञायते, अत एव साधोर्मम पितुरुपकण्ठं गन्तुं निषेधति, परमेष कथमपि रिपुर्न प्रतिभाति, मद्राज्यमपि न कामयत इत्यालोच्य स्वसौधं

गमनागमने पानाशने च करोति, परस्परमादानं प्रदानञ्च विदधाति, इत्थं कर्णामृतं तद्वचनं निशम्य झटित्येव सरलचित्तत्वेन मर्कटोऽपि गन्तुमुद्यतः। अथो मीनः कपिं स्वपृष्ठमारोप्य पयोधौ चचाल, किञ्चिद् व्रजित्वा मत्स्यः कीशमूचिवान्—सखे! त्वं कथयेश्चेत्तर्हि तथ्यं वच्मि, हरिर्जगाद—सुखेन ब्रूहि। मत्स्य उवाद—मद्योषित्ते हृदयं जिघत्सति, इत्याकर्ण्य समुत्पन्नमतिः शाखामृगो जहास, तमवोचच्च—भो भ्रातः! किमत्र दुष्करम्? परं त्वम्मे मूढः प्रतिभासि। अरे! प्रागेव, तत्कस्मान्न निवेदितम्? अहन्तु तदाम्रे बध्वाऽऽगतोऽस्मि, त्वद्वाञ्छा चेदधुनाऽप्याऽऽहरामि, झषोऽपि तथाकर्तुमादिश्य परावर्तत। पश्चाद् वानरोऽपि तीरमासाद्योत्प्लुत्य च सहकारविटपमारुरोह, प्रत्युत्पन्नबुद्धया जीवँश्च भद्रशतानि ददर्श॥ ६०॥ उक्तञ्च—

दोहा—मित्त! फुड़ाफुड़ि बोलिए, न जंपीह अलिएण। मुझ महिला तो जीवशं, खाधे तुज्झ हिएण ॥ १ ॥

रे जलचर! सुहलक्खणा, एको काज न किद्ध। घटभीतर जे कालजूँ, सो मैं आँवे बद्ध ॥ २ ॥

गया कपी महिमंडले, जलचर जा निज घर। तुझ महिला जीवे नहीं, तो तूं साथे मर ॥ ३ ॥

जलचर जीव कुबुद्धिआ, एको काज न सिद्ध,। घटभीतर जे कालजूँ, सो किम आँवे बद्ध? ॥ ४ ॥

अथोत्तमानुत्तमैरपि शोभते समुदायस्तत्र ६०—कथा—

वत्तीशः सचिवं हि दीर्घलघुभिर्द्रंगं गृहैर्भाति नो, ये पूर्णा धनमन्दिरेण च पुरे ते रक्षणीया जनाः।
विध्यन्ते यदि पञ्च षड् वदति भोः! शून्यं पुरं स्यात्तदा, तत्त्वं मा कुरु तं तथाऽस्तु नृपते! तद्गुणे साधवः ॥६१

ज्यञ्जनानि च किं स्थूलिकारूपेण संपन्नानि ? ततः श्वश्र्वाऽमि-
त्वं परिवेषयन्ती विसस्मर्थ, उत मम भाग्यदोषेणैव श्राणापायसप्रभृतीनि व्यञ्जनानि च किं स्थूलिकारूपेण संपन्नानि ? ततः श्वश्र्वाऽभि- वदनं वीक्ष्य स्थासकः स्थापितः, तस्मात्स्थूलीमेव जग्ध्वा
हितं नाहं व्यस्मार्षम्, न चापि क्षैरेय्यायशाग्वादिः स्थूली परिणता, किन्तु
सन्तोषेण सहर्षं समुत्तिष्ठ ॥ ६२ ॥ तयोरुक्तिप्रत्युक्ती यथा—

दोहा—एके भाणे लापसी, एके भाणे थूली । केतो सासू सावकी, परसण वाली भूली ? ॥ १ ॥

तदुत्तरे—नहि है सासू सावकी, न परसण वाली भूली । मुख देखी टीलुं कियुं, मार गटागट थूली ॥२॥

स्वल्पोऽपि नियमोऽतिलाभाय संपद्यते तत्रैकश्रेष्ठिनः ६२—कथा—

स्वल्पोऽपि नियमोऽतिलाभाय संपद्यते वणिक् पृष्ठगः ।
शीर्षं वीक्ष्य ततोऽभि सद्गुरुमुखादेतद् गृहीतं व्रतं, चक्री त्वेकदिने गतः स मृत्तिकाखन्यां वणिक् पृष्ठगः ।
द्रव्यं तत्र हि निर्गतं स च वणिक् दृष्ट्वेत्यवग् दूरतः, त्वं मा याहि गृहाण चार्धविभवं लात्वाऽऽलये सोऽगमत् ॥६३

पुरा कस्मिंश्चिन्नगरे धर्मगुरुरागात्, तदा बहुभिर्लोकैर्व्रतं गृहीतं, तेष्वेकेन वणिजा कुलालमस्तकं वीक्ष्यैवाहमश्नीति नियमो गृहीतः, पश्चात्स निरन्तरं कुलालकपालं विलोक्यैव भोजनं कुरुते स्म । एवं कुर्वन्नेकस्मिन्नहनि कुम्भकारो मृत्स्नामानेतुमगमत्, स च वणिक् तद्गृहमागतस्तदानीं तद्भार्यया तदुदन्तं लब्ध्वा पुनर्मृत्खननस्थानेऽयासीत्, तस्मिन्नेव क्षणे कुलालो मृत्तिकां खनन् द्रव्यभाण्डं प्राप । ततः कुलालमस्तकं विलोक्य श्रेष्ठी कथयामास—दृष्टं रे दृष्टं, तन्निशम्य चक्री व्यचिन्तयदनेन द्रव्यभाण्डो विलोकितः, अतस्तत्रैव स्थितः सन्नाजुहाव वैश्यम् । 'यदानन्दमेवानन्दं लभ्यमेव लब्धमिति ब्रुवंस्तदभिमुखं प्राधावीत्, अत्रदचार्धं ते वित्तमर्धञ्च ममेति श्रुत्वा वणिक् परावर्तिष्ट द्रव्यार्धमादाय गृहमागतः । तस्माद् यादृशस्तादृशः कोऽपि नियमो नूनं फलप्रदो जायते ॥६३॥ कथितमपि—

योऽपि सोऽपि ध्रुवं प्राप्यो, नियमः पुण्यकांक्षिणा । स्वल्पोऽप्यनल्पलाभाय, यथा स्वस्याददर्शकः ॥ १ ॥

अथानन्तानुबन्धिकोपस्योपरि दन्तपातककुशिष्यस्य ६३-कथा—

लब्ध्वा सर्षपशाकमाशु गुरुणा जग्धं तदा कोपतः, शिष्यश्चिन्तति पातयामि दशनानास्याद् गुरोश्चैकदा ।
कृत्वा तेऽनशनं दिवं शयमुखादन्तांश्च सोऽपातयत्, मृत्वा क्रोधवशेन चैव नरकं प्राप्तोऽविनीतो जडः ॥६४॥

कस्मिंश्चित्पत्तने गुरुशिष्यौ विचरन्तौ समागतौ, तत्र शिष्यो भिक्षामटितुं गतो, भिक्षायां सर्षपशाकं लब्धवान् । तत्र गुरुणै-काकिनैव खादितम्, शिष्याय न दत्तम् । ततो रुष्टः शिष्यो व्यमृशत्-अनेन मह्यं शाको नार्पितस्तस्मादूनमेवास्य रदनानुत्पाटयिष्यामि श्रीवत्तु केनाप्युपायेन दशनानोत्पाटयितुं न शक्यन्ते, इत्थं चिन्तयतस्तस्य दिनानि व्यतियन्ति स्म । एकस्मिन्दिवसे गुरुः सुखवृत्या नशनं कृत्वा दिवमारुरोह । शिष्यमान्तेऽवसरं प्राप्य केनाप्युपायेन स्वगुरोर्दन्तानत्रोटयत् । तेन कुकर्मणा स कुशिष्यः प्रेत्य घोरे नरके पतितः, अविनीतश्च लोके जिनशासनदूषकोऽभवत् । एषोऽनन्तानुबन्धी रोषोऽस्याहितकरस्तस्मात्परिहर्तव्यः ॥६५॥ उक्तं च-

यो भवेद्यगति गर्वगर्जितो, दीर्घरोषसहितश्च मानवः । प्रेत्य घोरनरके व्रजेत्तथा, दन्तपातकलुषान्मुनिर्यथा ॥१॥

अथ धनस्याऽऽदरोपरि भगिनीसोदरयोः ६४-कथा—

निःस्वं सोदरकं निरीक्ष्य भगिनी भ्राता न मे सूपकृत्, श्रुत्वा तद्वचनं धनं जनपदे लात्वाऽऽगतस्तद्गृहे ।
स्यास्यां भुञ्जति खादिमं वदति स स्वाभूषणान्यत्त भो ! किं भ्रान्तो वदसीति ? येषु सुकृतस्तेषामहं पूर्वगः ॥६५

कश्चिद्धनो मनुष्यः कयाचिदाशया स्वभगिनीसमीपं गतः। तत्र सा सोदरं मलिनवेषं दृष्ट्वा व्रीडिता सती बभाण–नायमस्मद्भ्राता किन्त्वस्मत्पितुर्गृहे चुल्लीफूत्कृत्सूदः। तस्या वचनं श्रुत्वा व्यग्रीभूय स वित्तमुपार्जितुं विदेशे गतः। तत्र प्रचुरं धनं संचित्य गृहीत्वा च स्वसृवेश्म पुनः प्रत्यागतः। तदानीं तं धनवन्तं बुध्वा द्रव्यप्रेमवशेन साधु पर्यपूजयत्, भोजनवेलायाश्च पाञ्यां षड्रसभोजनानि पर्यवेषयत्। तदानीं स पूर्वगतदिवसं स्मृत्वा केयूरप्रभृतीनि भूषणान्युत्तार्य स्थाल्यामसुंचत्, तथा च वक्तुं प्रवृत्तो येन मद्भगिनी शृणुयात्। भो भूषणानि! यूयमेव पुरःस्थितं भोजनं भुंग्ध्वम्। ततः स्वसाऽवदत्–हे भ्रातः! किमु निगदसि? विचारमूढस्तु न संवृत्तः? अथ सोदरः प्रत्युवाच– नाहं विचारमूढः किन्तु यान्यवेक्ष्य त्वयैतदशनं परिवेपितं तान्येव भोजयामि। यदा प्रागागमं तत्र गृहे तदा त्वया स्वपितुः सूपकृद् भाषितोऽहं तस्मान्मान काञ्चनमेवाश्रयते ॥ ६५ ॥ यतः—

दोहा–गरथें आदर दीजिये, सत्कारीजे दाम। पहिले फेरे आपिओ, चुल्ली–फूँकण नाम ॥ १ ॥

अथैकान्तेनैव सुनाम्नि गुणो न भवति तत्र ठण्ठणपालस्य ६६–कथा—

नाम्ना ठण्ठणपालकोऽस्ति धनवांस्तस्यांगना चिन्तति, नो तिष्ठामि गृहेऽस्य यामि धनपालस्य स्वगेहाद् गता।
दृष्ट्वाऽप्यन्यमरं मृतं च धनपं ह्यन्यालये भिक्षितं, लक्ष्मीं काष्ठकविक्रयां गृहगता ज्ञात्वा शुभं ठण्ठणम् ॥६६॥

कस्मिंश्चिन्नगरे सर्वकलाकुशलः पंचाग्रगण्यो ठंठणपालनामा धनिको निवसति स्म। तस्य स्त्री यदा बहिर्याति तदा ठंठणपाल-योषिन्नाम्ना लोकास्तामाह्वयन्ति। ततः सा व्यचिन्तयत्–अधुना ठंठणपालस्य गेहे नैव स्थातव्यं, किन्तु कस्यापि धनपालस्य

नगरस्याठस्य या स्नुमसंज्ञस्य सपनि पत्नी भूत्वा निवासः भेमान्, एवं संशयार्थं गृहाभिमक्राम । मध्ये पथि यान्ती—अमरपालनामानं मृतं दृष्ट्वा, ततः किञ्चिदग्रे गत्वा धनपालमेकं याचमानमपश्यत्, पुनः कतिचित्पदानि यात्वा लक्ष्मीनाम्नीमिन्धनं विक्रीणतीमवालोक्य । एवं सर्वानपि स्वराभिधायविरुद्धमाचरतो विलोक्य निर्णिनाय-गुणेषु नाम्नो कारणता नास्ति, तस्मादस्माकन्तु ठंठणपालमपिरेव शुभः । तथोक्तं, दोहा—अमर मरन्तां मे सुना, भीखन्तां धनपाल । लछमी छाणा वेंचती, भलो छे ठंठणपाल ॥ १ ॥

अथ गुणग्राहिणा सज्जनेन भवितव्यं तत्र कृष्णस्य ६९—कथा—

इन्द्रः संसदि माप्यमाह नृमये कृष्णो गुणग्राहको, भूत्वा श्वानमृतः सुरो निपतितो मार्गे तमालोक्य सः । दन्तश्रेणिशुभां शुनोऽपि सकलं स्पष्टस्वाऽशुभं दोष कं, श्रुत्वाऽमूल्यकदः सुरो दिवि गतो धन्योऽसि नत्वा हरिम् ॥

यत्तु शक्रः स्वसंसदीत्यमभाष्य, यत्साम्प्रतं मर्त्यलोके कृष्णवासुदेवसमतिमः कोऽपि गुणज्ञो नास्ति । तद्वचनं निशम्य कोऽपि देवः श्रीकृष्णस्य गुणग्राहित्वं परीक्षितुं श्वेतकुक्कुररूपं कृत्वाऽध्वनि पपात, ततस्तस्मात् पूतिगन्धं निस्ससार । कृष्णवासुदेवस्तं विलोक्य तदोपानप रस्य जगाद—अस्य सारमेयस्य शिवरमणी कीदृशी मनोरमा ? एवं मृतशुनो गुणान् जगाद, दोषांश्च तत्याज । श्रीकृष्णस्यैवं गुणग्राहकतां प्रतीतो देवः स्वस्वरूपमास्थाय श्रीकृष्णस्य चरणौ ववन्दे । पुनस्तं संस्तुत्य परमं दत्त्वा स्वावासमयासीत् । अतो भव्यैर्गुणो ग्राह्यो दोषस्तु हेय एव ॥ ६७ ॥ उक्तञ्चापि—

संसारे सुखिनो जीवा, भवन्ति गुणग्राहकाः । वत्समास्ते च विशेषा, दन्तश्रीसकृष्णवत् ॥ १ ॥

ममलस्य रसज्ञाया, मिश्रयोः क्षीरनीरयोः । विविच्य पिबति क्षीरं, नीरं हंसोऽपि मुञ्चति ॥ २ ॥

असंख्याः परदोषज्ञाः, गुणज्ञाश्चापि केचन । स्वयमेव स्वदोषज्ञाः, विद्यन्ते किल पञ्चषाः ॥ ३ ॥

छीरामिव जहा हंसा, जे घुट्टंति गुरुगुणसमिद्धा । दोसे विवज्जयंतो, तं जाण सुजाणयं पुरिसं ॥ ४ ॥

अथ सम्यक्त्वधर्मदार्ढ्ये श्रेणिकनृपस्य ६७–कथानकम्—

सम्यक्त्वं किल वर्णितश्च हरिणा श्रीश्रेणिकस्यामरो, भूत्वा साधुनिभस्तदा जलचरान् गृह्णाति तत्राऽऽगतः ।
दृष्ट्वा वक्ति किमाः करोषि? हि मुने! त्वं सदयाहेतवे, दुर्भव्यस्त्वमसीति नो जिनमते कृत्वा स्वरूपं स्तुतः ।६७।

कदाचित्पुरन्दरपरिषदि सम्यक्त्ववार्ता समुपक्रान्ता तदानीमिन्द्रः श्रेणिकनृपतेः सम्यक्त्वं प्रशशंस । तदाकर्ण्य मिथ्यादृष्टिः कश्चिद्देवो भूपं परीक्षितुं मुनिनेपथ्यं विधाय धर्मध्वजं मुखपत्तिकां दण्डं कम्बलञ्चानीय सरस्तटे स्थितः । तत्र मत्स्यान् ग्रहीतुं प्रवृत्तस्तं तथा दृष्ट्वा मार्गे गच्छता श्रेणिकेन राज्ञोक्तम्–साधो! मुनिप्रतीपं कर्म कस्मादनुष्ठीयते? मुनिवेषञ्च कथं विडम्बयसि? तदा कपटमुनिर्बभाषे–राजन्! त्वं साधुधर्मविषये किं जानीषे? अहं झषान्निष्कास्य विक्रीय च कम्बलं क्रेष्यामि, तस्माद्दर्पतो जीवरक्षा भविष्यति । यतो भगवता जलस्यैकस्मिन्बिन्दावपरिमिता जीवा भवन्तीत्युक्तम् ते वै जीविष्यन्ति चाऽन्यथा मरिष्यन्ति । तच्छ्रुत्वा राजाऽवोचत् त्वं दुर्भव्योऽनंतसंसारी परिदृश्यसे यत्साधुवेषी भूत्वापीदृशं कुकर्म करोषि । जैनशासने तु नैवं क्वाप्यमाणि, जैनागमविरुद्धमेतद् इत्थं त तिरस्कृतवान्, परमपरं मुनिं न निनिन्द । स देव इत्थं नृपं सम्यक्त्वेऽतिदृढं विदित्वा स्वरूप प्रदर्श्य तं भृशं प्रशशंस, स्वस्थानञ्च गतः । ॥६८॥ कथितं चापि—

क्रियाहीनं कुसाधुञ्च, दृष्ट्वा चित्तं न चालयेत् । तत्सम्यक्त्वं दृढं ज्ञेयं, यथा श्रेणिकभूपवत् ॥ १ ॥

अथ जीवदयामधिकृत्य सत्रैकस्य नृपस्य १८–कथा—

नृपः संसदि वर्णितो हि हरिणा देवोऽपीति देवो गतः, भुक्त्वाऽथ बलिं न चेत्सुरजनान्हन्मीति मंत्रोऽभवत् ।
सोपायश्च तदा जनैर्निशिशुकं लात्वा यथायार्पित–स्तत्स्थाने नृपतिः स्थितो ननु सुरस्तुष्टो नृपं श्लाघते ॥१८॥

पुरा पुरन्दरेण निजपरिषदि कश्चिद् नृपः संस्तुतः, तच्छ्रुत्वा तं परीक्षितुं कश्चिन्मिथ्यादृष्टिर्देव आगत्य राजानमुवाच–राजन् ! मह्यं नरबलिं देहि, न प्रयच्छसि चेत्सर्वानेव नगरवासिनो हन्मि । नृपेणोक्तम्–नरबलिप्रदानं स्वप्नेऽपि कर्तुं न शक्यते क्व पुनस्तत्प्रदानम् ! तदा देवो नगरमात्रीं शिलां नगरोपरि प्रक्षेप्तुं सज्जितोऽभवत् । तां दृष्ट्वा भीतिविह्वलाः पत्तनवासिनो नृपमूचिरे–भो महीपते ! एकस्य कृते बहूनां वधो भविष्यति, अत एकं नरबलिं दत्त्वाऽस्मिञ्जनान् रक्ष । तत उर्वीपतिराह–एतत्कर्तुं मया न शक्यते, यद्भाव्यं तदेव भावि । पुनः किमस्ति कोऽपीदृशः परोपकारी यो हृष्टो मर्तुं वाञ्छेत्, येन नरेण च देवं प्रसादयेयमिति ? इत्थं भूपस्य राज्ञोक्तिं निशम्य सर्वैः समेत्य तदानीं चिन्तितम्–कोटिमुद्राणां स्वर्णपुत्तलिकां कोटिदीनारांश्च कस्मैचिन्निर्धनाय प्रयच्छामः, प्रतिफले च तस्मात्पुत्रं गृहीत्वा नरबलिं देवबलिं दत्त्वा स्वस्थचित्ता भवेम । इत्थं सर्वैर्निश्चित्य तथाकृते सति कश्चन निःस्वः पुत्रस्य प्रीतिः पुत्रं प्रायच्छत्, तमुपरामं नीत्वा बलिसदने च समुपवेशितः । बालो नृपं निभाल्य हसन्नुवाच, शृणु भूपते मम वचः–प्राणिनां मृत्युर्ध्रुवः, तस्मादेकोऽहं स्वशरीरव्ययेन सर्वानपि पत्तनवासिनो जनान् जीवयिष्ये । एतच्छ्रुत्वा नृपस्तु प्रधानाचरत्पदमभ्यतिष्ठत् । ततः प्रीतो देवो महीपतिं स्तुवन् वक्तुं लग्नः–हे दयालो ! त्वं यथेन्द्रेण सदसि वर्णितस्तथैवासि । इत्युक्त्वा देवः स्वस्थानमगमत् । कथितञ्च—

सोनुं शरीर देइने, ऊपर कंचन कोड़ि । आणि बाल बेसाड़ियो, बालि देवाने ठोड़ि ॥ १ ॥
नृप सामुं देखी हसे, बालक मन उल्लास । देखि दया नृप मन धरी, बेठा बालक पास ॥ २ ॥
बाल तजी मुझने भखो, जो हो बलिनुं काज । सुर संतोषे इम कहे, कर नृप अविचल राज ॥३॥

अथ पुनर्दयोपरि मेघरथनृपस्य ६९—कथा—

वज्री पर्षदि वक्ति मेघरथको भूपः कृपातत्परो, भूत्वा तौ विहगौ तदा हि नृपतेरुत्सङ्गके साध्वसात् ।
रक्ताक्षोऽपतदीश! रक्ष शरणे तं तद्भयं मा कुरु, श्येनायाऽऽत्मपलं ददौ स च सुरो नत्वाऽऽशु नाकं ययौ॥७०

अथैकदा सुनासीरः सदसि मेघरथनृपं दयालुत्वे धीरत्वे च तुनाव। तां वार्तां श्रुत्वैकः कश्चिद्देवः पारावतस्य परः श्येनस्य च स्वरूपमास्थायोभौ प्रस्थितौ। श्येनः पारावतमभ्यवहर्तुमभ्यधावत, पारावतो धावित्वा भूजानेरङ्कमध्यतिष्ठत, वेपमानश्च महीपालं प्रोवाच—हे धरापते! श्येनादस्मात् त्रायस्व माम्, तदा नृपस्तं स्वाङ्के समुपावेशयत् । तत्रान्तरे श्येन आगत्य क्षोणीपतिं बभाण—"भो मनुजेश्वर! त्वममुं विहगं परिहर, यतो बहुदिनेभ्यः क्षुधया पीडितोऽस्मि। न मुञ्चसि चेन्मह्यमियत्परिमाणमेव स्वमांसं देहि । तच्छ्रुत्वा पृथ्वीपालः स्वमांसं कर्तित्वा २ दातुं प्रवृत्तः, परं देवमायया तन्मांसं कपोतपरिमाणकं नाऽभवत्। ततो राजा सदेहस्तुलायामारूढः, श्येनश्चावदत्—भोः पत्रिवर ! मत्पिण्डमशान । तथा गदन्तं नृपं निभाल्य देवस्तुतोष व्याजहार च—गरीयसी ते सत्यसन्धतेति तं प्रणम्य च स्वावासमुपेयाय ॥७०॥ उक्तश्च—

दयावन्त सुर सामली, कर पंखी ये रूप। एक भूप स्रोखे पखा, एक दिये तस रूप ॥ १ ॥
राजा सुरशुं इम कहे, मूक कबूतर एह। हठ पकवी मूके नहीं, भूप दिये तस देह ॥ २ ॥
अतुल पुण्य उपराजियो, पामे पदयुग ठोड़। दया प्रभावे देवता, सेव करे कर जोड़ ॥ ३ ॥

अथ हिंसानिषेधोपदेशो धनपालपण्डितस्य—७०—कथा—

भुत्वाऽऽजाधघनं हि भोजनृपतिर्यज्ञे बुधान् पृच्छति, प्रोचुस्ते किममी वदन्ति ननु? तं विज्ञप्तिकामीश! ते।
कीदृक् सा शृणु काव्यमेव कविना प्रोक्तं प्रभुस्तत्‌तदा, श्रुत्वा सर्वपशून् कृतो हि नियमो यज्ञस्य धर्मे रतः ॥७१

अथैकदा मोक्षयपाला यज्ञे हननार्थं छागानानाययामास 'ते बहुशो मे मे शब्दमकुः'। ततो नृपो धनपालपण्डितं पप्रच्छ, कस्मादेते छागाः शब्दायन्ते? पुनोऽवदत्–राजन्! एते प्रार्थयन्ते, सर्वे लोकाः सम्यक् शृणुत। तदैव पुनर्नृपः पप्रच्छ–'किमेते निवेदयन्ति? यदि जानासि तर्हि कथय।' ततः कविः पद्यगिरोवाच—

नाऽहं स्वर्गफलोपभोगतृषितो नाभ्यर्थितस्त्वं मया, सन्तुष्टस्तृणभक्षणेन सततं साधो! न युक्तं तव।
स्वर्गं यान्ति यदि त्वया विनिहता यज्ञे ध्रुवं प्राणिनः, यज्ञं किम करोषि मातृजनकैः पुत्रैस्तथा बान्धवैः?॥१॥

"हे नरनाथ! एते कथयन्ति–यदि यज्ञे पशवो होमेन स्वर्गं लभन्ते, तथापि नो वयं स्वर्गेप्सवः," यज्ञाय नीताः स्वर्गं यान्ति–यदि तस्मात्स्वयान् हुत्वा स्वर्गं कथं न प्रेषयसि?। ततः प्रिय एव गरीयसा भेषसा धुनुष्या मोच्यते नराः। नाहं वो जननी जनकोऽपि

भूपः पृच्छति मांसमौल्यमनुगान् प्रोचुश्च तेऽल्पं सुतो–ऽनल्पं वक्त्यभयो निवारयति भोस्तं दर्शयामि प्रभो ! ।
गत्वा सर्वगृहे नृपाय हृदिजं तद्देहि नाऽऽप्तं पलं, ग्राह्यं लाहि धनं न तेन तदितो लात्वाऽर्पितं भूपतेः ॥७४॥

अथैकस्मिन् दिवसे श्रेणिकनृपः सदसि स्वसामन्तान् पप्रच्छ—भोः ! किमद्यश्वो हीनमूल्यं वस्तु लभ्यते ? ततस्ते प्रोचुः—राजन् ! मांसमल्पमूल्येन प्राप्यते । तत्क्षण एव राजकुमारोऽभयः कथयामास—राजन् ! मांसस्य महन्मूल्यं वर्तते । ततस्तत्पित्राऽभिहितं–त्वमर्भकोऽसि, मूल्यस्याऽल्पाऽनल्पत्वे किं वेत्सि ? अभयकुमारः पुनरप्यूचे–नहि राजन् ! अस्य निर्णयमल्पेष्वेव दिवसेषु प्रत्यक्षं कारयिष्यामि । पश्चादभयकुमारेण राजानं प्रत्युक्तम्—पितः ! आमयच्छलेन भवता सौध एव स्थातव्यं, परिषदि च नाऽऽगन्तव्यम् । ततोऽभयेनाखिलेऽपि पत्तने पटह उद्घोषितः–श्रेणिकभूपो व्याधिपीडितोऽस्ति । तदाऽभयकुमारेण युक्त्या सर्वसामन्तगृहे गत्वा निवेदितम्—सामन्तहृन्मांसं नृपोऽश्नीयात्तदा निरामयो भवेदिति भिषग्भिर्गदितमस्ति, तस्माद्देवस्तन्मांसमिच्छति, भवन्तश्च पलं पलं छेदं छेदं निजहृन्मांसं ददतु । तन्निशम्य सर्वेऽपि मिथो मुखं वीक्षमाणाः प्रोचुः—नृपाङ्गज ! यथेच्छं धनं प्रयच्छामः परं स्वात्माधार मांसदानन्तु दुष्करमेव सर्वेषाम् जीवानां । पश्चादाग्रहेण तेभ्यो द्राविणं गृहीत्वा महीपतिमदर्शयदचकथच्च–स्वमांसाऽर्पणमसंभवि लोके परेषान्तु प्रयासमन्तरेण लभ्यमपि । तमुदन्तं श्रुत्वा समेऽपि सामन्तास्तूर्णीं भूत्वा समुपाविशन् ॥७४॥

नृपः स्वात्मजगदितं वचनं युक्तियुक्तं विज्ञाय जगाद—

*स्वमांसं दुर्लभं लोके, लक्षेणाऽपि न लभ्यते । अल्पमूल्येन लभ्येत, पलं परशरीरजम् ॥ १ ॥*

केन श्रेष्ठिजनेन हाटकमयी स्थाली गृहे कारिता, धृत्वा रूपकपीठके प्रतिदिनं तस्यां रजः क्षिप्यते ।
तद्वच्चार्यसुदेशजं नरवपुर्धर्मश्च लब्ध्वा जडा, मानुष्या यदि नाऽऽचरन्ति सुखदं मोक्षस्य कामे रताः ॥७६॥

अथ कश्चिज्जडः श्रेष्ठी स्वर्णस्थालं कारयामास। तद् रूपकपीठे संस्थाप्य तस्मिन्नहरहो रजोनिकरं निकिरति स्म, एतन्निदर्शनमात्रम्। प्रकृते तु यो नर आर्यावर्तविषये दुष्प्रापं जन्म प्राप्य निर्वाणपददातारं श्रीजिनमतं नाऽऽराधते, स हतभाग्य एव ज्ञेयः । यतो मानुषं जन्म सुवर्णप्रतिमं तत्प्राप्य येन धर्मो न सुविहितः स स्वर्णस्थाल्यां रजःप्रक्षेपकः श्रेष्ठीव स्वजन्म निष्फलमेव यापयति। ये कामोपभोगलम्पटा मूढधियस्ते धर्माऽऽचरणपराङ्मुखत्वेन नरकाऽवटे मुहुर्मुहुः पतिता न जातु शर्म समुपलभन्ते ॥ ७६ ॥

दोहा–सोनाथाली मनुज–भव, पाप धूलिकण जोय । न करे ते नर जाणजो, मूर्ख शेठ सम होय ॥१॥

अथ जडमतिमूर्खवैद्योपरि ७७–कथा—

मृत्वा रोगहरो गतो दिवि यदा ज्ञात्वा स्वपुत्रं जडं, दत्ता तेन सुधा तदा जनकृते गच्छन्ति रोगाः समे ।
पीयूषैर्विशदं कृतं निजवपू राज्ञी गदैः पीडिता, राजा वक्ति निरामयं कुरु भिषङ् नो चेत्स निष्कासितः॥७७॥

कोऽपि भिषक् शुभध्यानेनेतः प्रेत्य व्यन्तरोऽभवत् । ततस्तस्य पुत्रो मूर्ख आसीत्, इति स व्यन्तरदेवः पुत्रस्नेहवशात् सूनवे सुधाकलशं प्रायच्छत् । ततः स सुधाप्रयोगेण सर्वानपि गदान्निवारयामास। एवमतिक्रामति काले तदात्मजः सुधया जगति विख्यातो जातः, प्रचुरं वित्तञ्चोपार्जयत् । एकस्मिन् दिवसे सुधाकुम्भं दास्याः सकाशादानाय्य स्ववपुः सर्वथा जीवनपर्यन्तं निरामयं कर्तुं सस्नौ ।

अथ कदाचित्तद्ग्रामस्य राजमहिषी गदग्रस्ताऽभवत्। ततो नृपो भिषक्पुत्रमाहूय पप्रच्छ—भो वैद्यवर! मम महिष्या रोगापनयनस्य त्वयि शक्तिर्भविष्यति न वा। अथ भिषक्पुत्रो जगाद—राजन्! भवत्कृपया सर्वं शक्यम्। तत्पुत्रः स्वपितुर्मुखाच्छ्रुतं रोगनिवारणोपायं विधातुं प्रवृत्तः, किन्तु तदौषधस्य सम्यग्ज्ञानाभावात्तस्य रोगो न निवृत्तः। ततः कुपितो राजा तं देशान्निष्कासयामास। अतो मूर्खस्य सुखं न भवति।

यथैवेदममृतसदृशं दुरापं नरत्वं प्राप्य ये जना वृथा गमयन्ति, ते दुःखभागिनो भवन्ति॥ ७७॥ उक्तमपि—

अमृत पड्यो ते नरभव, खोय अकारज ठाम। सफल जन्म ते हारिओ, मूर्ख वैद्य सम काम॥१॥ अपि च—

स्वर्णस्थाले क्षिपति स रजः पादशौचं विधत्ते, पीयूषेण प्रवरकरिणं वाहयत्यैन्धभारम्।

चिन्तारत्नं विकिरति कराद् वायसोड्डायनार्थं, यो दुष्प्रापं गमयति मुधा मर्त्यजन्म प्रमत्तः॥१॥

अथ सरलजडमुनिशिष्योपरि ७७—कथा—

शिष्यास् चकित विलम्बिताः क हि गुरुः प्रोवाच पीक्षामहे, तमार्थं हि नटस्य भो! जिनमते नैवेक्षणीयं कदा। सत्यं तेऽपि तथेति सद्गुरुतटे प्रासारतदा कालके, नट्या चाऽपि कृतं न्यपेधि सहतो नाऽत्र त्वया दृश्यताम्॥७८॥

कस्मिंश्चिद्दिवसे गुरुः शिष्यानुवाच—युष्मेताबन्तं कालं काऽऽस्त? तेष्वेको मुख्यशिष्य उक्तवान्—भगवन्! मध्येवर्त्म नटा नृत्यन्ति स, तान् प्रेक्षितुं भवतः। गुरुणोक्तम्—अस्माकं जिनशासने नाटकादिप्रेक्षणं प्रतिषिद्धमस्ति। तदा शिष्यस्तद्वचनमङ्गीकृत्य नाटकदर्शनं निन्द्य मिति मत्वाऽपि पुनः कतिपयैरेवाऽहोभिर्भिक्षां भिक्षितुं ययौ, तत्र विलम्बे जाते समागते च तस्मिन् भूयोऽपि गुरुणा पृष्टः—कस्माद्वि-

राचागतोऽसि ? तदानीमपि शिष्यस्तथैवोत्तर ददौ–गुरो! अद्य नट्याः प्रयोगं निभालयितुं स्थित आसम् । तन्निशम्य गुरुरवादीत्–
रादागतोऽसि ? तदानीमपि शिष्यस्तथैवोत्तर ददौ–गुरो! अद्य नट्याः प्रयोगं निभालयितुं स्थित आसम् ।

अरे मन्दबुद्धे! मम पुरः पुरा त्वया नाटकविलोकनं परित्यक्तम्, पुनस्तत्र कथं स्थितोऽभूः? तदा शिष्येणोक्तम्–आर्य! मया तु नट-

स्य नाट्यं परित्यक्तमासीत्, न तु नट्याः । तदा गुरुणा पुनः प्रतिबोधितः–नटनट्योर्नाटकावलोकनेन सांसारिकमोहोत्पत्तिः कर्मबन्धश्च

बोभूयते । ततः शिष्योऽपि नाट्यं स्त्रैणं पौंस्नं वा स्यान्न द्रष्टव्यमिति तद्दण्डं स्वीचकार ॥ ७८ ॥ कथितमपि—

निर्दम्भास्तु वरा मूर्खाः, साधवो ये भवन्ति ते । आलोचयन्ति गुर्वन्ते, यथा नाटकवीक्षकः ॥ १ ॥

अथ मूर्खपुत्रोपरि कस्यचित् श्रेष्ठिपुत्रस्य ७८–कथा—

दातव्यं पितरौ न वत्स! कथितः प्रत्युत्तरं वै त्वया, गेहाद् द्वौ विगतौ तदा जडमतिर्द्वारं जटित्वा स्थितः ।
माताऽऽगत्य सुतं ब्रवीति बहुशो नोद्घाटयोद्घाटति, गेहे ह्युत्तरतः कृतं किमिह रे! सोऽवग् युवाभ्यां मतम् ७९

कदाचित्केचिच्छ्रेष्ठिश्रेष्ठिन्यौ स्वसुतं शिक्षयतः–भोः पुत्र! पितृभ्यां पुरो विनयेन वर्तितव्यं, जातु प्रत्युत्तरमपि न देयम् ।
पुत्रस्तयोर्वचनं स्वीचकार, परं स बटुर्जडमतिरासीत्, इति तद्वचनाऽभिप्रायमज्ञात्वा मनसि निदधौ । पश्चादेकस्मिन् दिवसे तज्ज-
ननीजनकौ कार्यवशाद् बहिर्गतौ । तदा स मन्दमतिर्बालोऽभ्यन्तरतः कपाटौ पिधाय गृहे स्थितः । यदा तौ परावृत्याऽऽगतौ
पुत्रमूचतुः– हे पुत्र! कपाटमुद्घाटय २, एवं बहुकाथितोऽपि स बालिशोऽरं नोदघाटयन्न च प्रतिवचनमेव ददौ । ततो
हताशौ भूत्वा छदिमुत्पाट्याऽन्तः प्रविष्टावपश्यतां हसन्तं बालकम् । ततः पितृभ्यां भाषितम्- अरे मूढ! जानन्नपि कपाटं कथं

नोपृष्टवान् न चोत्तरं दत्तवान्? तदस्तेनाऽऽपि-पितरौ! भवद्भ्यामेव मह्यं शिक्षा दत्ता-मातापित्रोः पुरः कदापि किञ्चिदपि न वक्तव्यम्, तस्मादेव मया भवदाज्ञाभंगदोषभयात् प्रत्युत्तरं न दत्तम् ॥ ७९ ॥ एषोऽविनीतपुत्रस्य दृष्टान्तः। उक्तञ्च—

जडोऽपि यच्चकाग्रैव, यो भवेद् भुवि मानवः। श्लाघ्यते नैव लोके स, यथाऽभूत् श्रेष्ठिनन्दनः ॥१॥

अथ सुपात्रदानं निष्फलं न याति तत्र ७९-कथा—

श्वाशुर्ये पथि गच्छता जिनमुनेः कृत्वाऽष्टमे पारणं, पश्चात्स्वेष्टगृहे गतो हि गृहदं ज्ञात्वा नृपे देन्यपक् ।
सार्हि स्वं श्वशुरं न गेहपतितो लास्योपलाभैर्भरान्, रत्नान्याशु कृतानि वीक्ष्य गृहिणी पित्रा तु रम्यं कृतम् ॥८०॥

एकदा कश्चिदिभ्यस्तो जामाता श्वशुरालये धनलिप्सया पत्न्या प्रेरितः प्रस्थितः। सोऽध्वनि मिलितं कृताऽऽष्टाहिकतपसं साधुं निर्दम्भत्वेन पारणं कारयित्वा श्वशुरगृहाऽभिमुखं चलितः। अत्राऽन्तरे तत्पश्चुरकुलदेव्या तस्य श्वशुरं प्रत्युक्तम्-तव जामाता दारिद्र्यपीडितो धनार्थी त्वद्गृहे समेति, परं तेन मार्गमध्ये यो धर्मः कृतस्तं तुभ्यं दयार्थिं तस्मै धनं प्रयच्छ। एतावत्येव जामाता तद्गृहमुपागतः। तदा श्वशुरेणाऽभिहितम्—भवता धर्मेनि पुण्यं कृतं तन्मह्यं प्रयच्छ, प्रतिफले च धनं गृहाण। परं जामाता तद्धर्मफलं नाऽदात्, पराङ्मुख रिक्तकर एव निजगृहं प्रति, मार्गे सरितो मध्याद् दृषदः संचित्य पेटिकायां धृत्वा मस्तके संस्थाप्य स्वसदनाऽभिमुखं प्रवस्थे। तस्यां वेलायां मुनितपोऽपि दानफलेन शर्करा रत्नानि चक्रिरे। गृहाऽऽगतस्य तस्य पेटिका स्त्रिया समुद्घाट्य विलोकिता, बहुरत्नानि चाऽपश्यत्सा। ततः सा बभाष—स्वामिन्! मत्पित्रा परमोपकारः कृतो येन तुभ्यमियद्धनमर्पितम्।

तदा जामात्रा रत्नानि विलोक्य ज्ञातम्-मार्गे मया यो दानधर्मः कृतः-सुभावेन साधवेऽन्नं दत्तम्, तत्पुण्यप्रकर्षेण सर्वमेतत्फलितम्. पश्चात्कृत्स्नमपि वृत्तं याथातथ्येन स्वकलत्राय निवेदितम् ॥ ८० ॥ तस्मात्काले दत्तं सुपात्रदानं किं किं न सूते ? गदितञ्च—

धर्मथकी धन संपजे, धर्मे शिवसुख थाय। कंकर पण रत्न ज कियाँ, देवे धर्मपसाय ॥ १ ॥

धम्मेण कुलप्पसूई, धम्मेण य दिव्वरूवसंपत्ती। धम्मेण धणसमिद्धी, धम्मेण सुवित्थरा कित्ती ॥ २ ॥

अथाऽसंभवं नैव संभवति तत्र ८०-कथा—

श्रेष्ठ्यंघ्रौ यदि कंटकं हि निशितं भग्नं तदा सेवकान्, गृह्णीताह वणिक्स चर्म बहुलं धीमान् किमर्थं तदा ?। भूम्याच्छादनहेतवे परपदत्राणाय तं नाऽधुना, भूतं नैव भविष्यतीति किमु भोस्ते पादरक्षां कुरु ॥ ८१ ॥

कस्याऽपि मन्दमतेः श्रेष्ठिनः पादे तीक्ष्णं कण्टकं विद्धम्। तेन स दुःखीभूय सेवकानुक्तवान्-यतस्ततो यावन्ति चर्माणि समुपलभ्यन्ते तावन्ति सर्वाणि समानेयानि, तत्र समर्घमहार्घयोश्चिन्ता न विधेया। तच्छ्रुत्वा कश्चिद्धीमानिभ्यमत्रोचत्-भोः श्रेष्ठिन् ! इयच्चर्म गृहीत्वा किं विधित्ससि ? निकृष्टो व्यवसाय एषः। तदा धनिना जल्पितम्-धीमन् ! मम चरणे कंटकं लग्नं भग्नश्च तत्पीडितोऽहं सर्वजनहिताय समस्तक्षोणीं चर्मपरिवृतां कारयिष्यामि, येन सर्वेऽपि कण्टकाऽऽर्तिविरहिता भवेयुः। तन्निशम्य कोविदोऽवक्-नेदृशं कार्यं कदाचिद् भूतं भविष्यति वा, तस्मान्मौढ्यपरीतममुं विचारं जहीहि, उपानहं कारयित्वा चरणं परिरक्ष ॥ ८१ ॥ उक्तञ्च—

चरणे कण्टके भग्ने, श्रेष्ठिना चिन्तितं तदा। आच्छाद्या चर्मभिः पृथ्वी, सर्वरक्षणहेतवे ॥ १ ॥

दोहा—अणहुती कीजे नहीं, कीजे होय सुजाण । शेठने पण्डित पोलियो, तव समज्यो ते आण ॥ २ ॥

अथ सत्सु सतामुपदेशः शीघ्रं फलति तत्र ८१– कथा—

राज्यं धर्मरुचि ददौ न च लातौ गच्छामि पित्रा समं, भूत्वा तापसकौ गतौ यदि वनेऽमावास्यकायामथक् ।
छेत्तव्यं नहि पत्रकादिकमपि दृष्टा सुधर्मेच्छुको, रक्ष्यं स्वेकदिने च सोऽनिशमदः श्रुत्वा मुमुक्षुस्तदा ॥८२॥

वसन्तपुरे जितशत्रुनामा नृपतिः स्वकीयं राज्यं धर्मरुचिनाम्ने स्वपुत्राय ददौ, स्वस्य च तापसत्वाङ्गीकरणं प्रकटीचकार । तदा राज्यमगृह्णता पुत्रेणोक्तम्—पितः ! अहमपि त्वया सहैवागमिष्यामि, तत्र च सहैव तपश्चरिष्यामि । पश्चात् पितापुत्रावुभावपि वने गत्वा तपस्विनौ । अथैकदाऽमावास्यादिवसे ज्येष्ठेन मुनिना कश्चित् प्रत्युक्तम्—अद्याऽमावास्येति पुष्पफलादिकं न त्रोटनीयम्, तन्निशम्य धर्मरुचिरितस्ततः परिभ्रमन्नरण्ये साधुमेकं ददर्श, तमभ्युपेत्य चाभ्योचत्—भगवन् ! अद्यामावस्येति भवान् पुष्पफलादिकं न छेत्स्यति किम् ? तदाऽऽकर्ण्य मुनिनाऽप्यभाषि—अङ्ग ! अस्माकं सर्वदैव फलादित्रोटनस्याऽनध्यायः । तत्सदुपदेशं श्रुत्वा धर्मरुचिर्जातिस्मृतिं प्राप्तः । ततःप्रभृति तेन पापभीरुणा धर्मरुचिनापि फलपुष्पादित्रोटनप्रत्याख्यानं त्रिविधेन विदधे ॥ ८२ ॥

वक्तव्य–गुरूपदेशतो धर्मं, केचिज्जानन्ति मानवाः । अन्ये धर्मरुचेस्तुल्यं जातिस्मरणज्ञानतः ॥ १ ॥

अथ मनसः सुपरिणामेन प्राप्तकेवलज्ञानस्य प्रसन्नचन्द्रराजर्षेः ८२–कथा–

नरकाऽपृच्छदयं गमिष्यति नृपो वीरं क मृत्वा प्रभो !, सोऽवक्तं सप्तमसत्पुरी हेतोः कुतो ? दुर्ध्यानात् ।
पश्चात्साधु पुनः स्वरायदरमे देवाः क यान्त्युत्सवे, तत्र तेन च केवलं जिनपथः श्रुत्वेति तां श्रेणिकः ॥८३॥

एकदा श्रेणिकनृपः श्रीमहावीरप्रभुं वन्दित्वा पप्रच्छ-भगवन् ! राजा प्रसन्नचन्द्रो दीक्षामादाय वने कायोत्सर्गध्याने सूर्याऽभिमुखं
पश्यन्नेकेन चरणेन स्थितोऽस्ति, तस्माद्यदि साम्प्रतं म्रियेत, तर्हि कस्यां गतौ जायेत ? भगवता प्रोक्तम्-प्रथमनरकतः सप्तमं यावद्
गामिष्यति । ततः पुनरपि श्रेणिको जगाद-प्रभो ? यद्येतादृशस्तपस्वी नरकं व्रजेत्तदा धर्माचरणं कः करिष्यति ? एतन्निशम्य भग-
वताऽभिहितम्-तस्य मानसिकः संग्रामस्तं नरके नेष्यति । क्षणान्तरे श्रेणिकः पुनरप्राक्षीत्- भगवन् ! यदीदानीं प्रसन्नचन्द्रराजर्षि-
म्रियेत, तदा कां गतिं लभेत ? भगवता पुनरप्यभाणि-प्रथमदेवलोकादारभ्य पञ्चममनुत्तरविमानं यावत्तस्य गतिः स्यात् । अत्राऽ-
न्तरे भगवतः समवसरणाद्देवा गन्तुमुद्यता बभूवुः, तदानीं श्रेणिकोऽपृच्छद् भगवन्तम्-भगवन् ! एते देवाः कुत्र गच्छन्ति ? तदा
भगवता व्याहृतम्-प्रसन्नचन्द्रराजर्षेः केवलज्ञानमुद्भूतमस्ति, तदुत्सवं विधातुमेते व्रजन्ति । तदा राज्ञा मनसि ध्यातम्-अधुनैव
भगवता तस्य नरकगमनं भाषितं,पुनरिदानीं केवलज्ञानमिति विरुद्धमिवाभाति तथापि भगवतो वचनं त्वन्यथा न भवितव्यम्,
विपरीतमपि न संभवेत, निराधारमपि वक्तुं न शक्यम्, इत्थं संदिहानस्तमपनेतुं भगवन्तं पप्रच्छ । ततः प्रभुरवदत्-प्रथमं यन्मयोक्तं
यन्नरके गमिष्यति, तत्तव दुर्मुखसुमुखनाम्नोर्दूतयोर्वचो निशम्य मनोयुद्धे प्रवर्तमान आसीत्प्रसन्नचन्द्रराजर्षिस्तस्मान्नरकगमनाऽर्होऽ-
भवत, परं स मनोयुद्धं कुर्वन् सर्वमस्त्रजातं परित्यज्य शिरोवेष्टनोत्तारणार्थं शिरसि हस्तं न्याक्षिपत्तदा लुञ्चितं शिरो निभाल्य व्रीडितः
विचारितुं लग्नः-क एष दुर्विलासः? अहन्तु दीक्षितोऽस्मि, क्व एते रजःपरिणामाः पुत्रादयः ? कः कस्य पुत्रः ? कः संग्रामः ? कस्य
दुर्गः ? कस्य केन संग्रामोऽनित्यैषा क्षणभंगुरी मनोभावनाऽनिशं दुःखोदधौ निमज्जनोन्मज्जने कारयति जीवानस्मान्,इत्यमभेदभावं
भावयतस्तस्य कैवल्यं समुत्पन्नम् । तदेतदाश्चर्यकरमलोकसामान्यं वृत्तं श्रुत्वा श्रेणिकस्तुतोष ॥ ८३ ॥ उक्तमपि—

